॥ १३ ॥ परि वाजपति[1]रित्याज्यꣳ हविश्च त्रिः पर्यग्नि करोति ॥ १४ ॥ देवस्त्वा सवितोत्पुनो[2]त्वित्याज्यꣳ श्रपयति ॥ १५ ॥ तूष्णीमिध्माबर्हिर्वि[3]प्रोक्ष्य यथाम्नातमभिपरिस्तृणाति ॥ १६ ॥ परिधीन्परिदधाति ॥ १७ ॥ तेजो[4]ऽसी[5]त्याज्यमवेक्ष्य पश्चादग्नेर्दर्भेष्वासादयति ॥ १८ ॥ अभिघार्य स्थालीपाकमुत्तरत उद्वासयति ॥ १९ ॥ सकृदेवेध्ममाधा[6]य वैरू[7]पाक्षः प्रथमो होमानाम् ॥ २० ॥ ब्रह्मा[8]णमामन्त्र्य समिधमाधायाघारावाघार्याज्यभागौ हुत्वा युनज्मि त्वेति[9] च योजयित्वा ॥ २१ ॥ न ह्ययुक्तो हव्यꣳ[10] वहते[11] इति ह विज्ञा[12]यते ॥ २२ ॥ कामं पुरस्ताद्धुरो जुहोति—

युक्तो वह जातवेदः पुरस्तादिदꣳ विद्धि क्रियमाणꣳ यथेह ।
त्वं भिषग्भेषजस्यासि गोप्ता त्वया प्रसूता गामश्वं पू[13]रुषꣳ सने[14]मि ॥ स्वाहा ॥
इति ।
विश्वा अग्ने त्वयि[15] वयं धारा उदन्या इव ।
अतिगाहेमहि द्विषम् ॥

इति ॥२३॥ नक्षत्रमिष्ट्वा देवताꣳ यजेत । अहोरात्रमृतुं तिथिं च ॥२४॥ अभिघार्य यद्देवतꣳ हविः स्यात्त[16]र्चं जुहुयाद्यथादेवतꣳ यथादेवतया चर्चा ॥२५॥ आकूताय स्वाहा । आकूतये स्वाहेति[17] जयाञ्जुहुयात् ॥ २६ ॥ प्रजापतिः

1. MS. II. 7. 2. But Gdh.: ओं परि वाजपति दाशुषे (origin not traced).
2. MS. IV. 1. 12.
3. Sh. omits वि.
4. So also MānGṛ. II. 2. 11; but Sh. has ओजो.
5. MS. I. 1. 11.
6. Sh. ०दा०.
7. Sh. विरू०. Cf. Gdh.: सर्वतः पाणिपादान्तः सर्वतो ऽक्षिशिरोमुखाः । विश्वरूपो महानग्निः प्रणीतः सर्वकर्मसु ॥ विश्वरूपो नाम नानाप्रकाराग्निः । तस्मै प्रथमो होमः । तं ध्यायेत्.
8. Sh. ब्राह्म०.
9. MS. I. 4. 5.
10. The mss. हव्याꣳ.
11. For न...वहते Sh. reads: नह्यति । युक्तो वह. Cf. MS. I. 4. 5: युनज्मि त्वा ब्रह्मणा दैव्येनेति परिधिषु परिधीयमानेषु वदेत् । अग्नेर्वा एष योगः । अग्निमेतद्युनक्ति । युक्तो ऽस्मै हव्यं वहति.
Cf. also KS. XXXI. 15: ...अग्नेर्वा एष या(correct यो)गः । ब्रह्मणैवाग्निं युनक्ति । युक्तो ऽस्य हव्यं देवेभ्यो वहति.
12. Sh. F. इति हविर्ज्ञो०.
13. Sh. पु०.
14. The mss. सनेमि.
15. Before त्वया F. G. insert त्वा.
16. Sh. omits त्व.
17. Sh. omits आकूतये स्वाहा.

प्रायच्छत्[1]। इडामग्ने[2] इति स्विष्टकृतमुत्तरार्धपूर्वार्धे जुहुयात् ॥ २७ ॥ मेक्षणमुपयामं पवित्रे चान्वादध्यात् ॥ २८ ॥ अन्वद्य नो अनुमतिः[3]। अन्विदनुमते त्वम्[3] [ इति । ] भूः स्वाहेति[4] प्रायश्चित्ताहुतीश्च[5] ॥ २९ ॥ त्वन्नो अग्ने[6]। स त्वन्नो अग्ने[6]। मनो ज्योतिः[7]। त्रयस्त्रिꣳशत्तन्तवः[8]। अयाश्चाग्ने ऽसीति[8] च ॥ ३० ॥

इमꣳ स्तनं मधुमन्तं धयापां प्रपीनमग्ने सलिलस्य मध्ये ।

उत्सं जुषस्व मधुमन्तमूर्मिꣳ समुद्रयꣳ सदनमाविशस्व[9] ॥ स्वाहा ॥

इति परिधिविमोकमभिजुहोति ॥ ३१ ॥ अन्नपते[10] इत्यन्नस्य जुहुयात् ॥ ३२ ॥ एधो ऽस्येधिषीमहि स्वाहेति[11] समिधमादधाति। समिदसि समेधिषीमहीति[11] द्वितीयाम् ॥[12] ३३ ॥ बर्हिषि पूर्णपात्रं निनयेत् ॥ ३४ ॥ एषो ऽवभृथः[13] ॥ ३५ ॥ पाकयज्ञानामेतत्तन्त्रम्[14] ॥ ३६ ॥ आपोहिष्ठीयाभिर्मार्जयित्वा पर्युक्षेत ॥ ३७ ॥ वरो दक्षिणा । अश्वꣳ वरꣳ विद्यात् । गामित्येके ॥ ३८ ॥

इति वाराहगृह्ये[15] प्रथमं खण्डम्[16] ॥

---

1. MS. I. 4. 14.
2. MS. II. 7. 11.
3. MS. III. 16. 4.
4. MS. III. 11. 10.
5. Gdh. begins the प्रायश्चित्तहोम with भूः स्वाहा.
6. MS. IV. 10. 4.
7. MS. I. 7. 1.
8. MS. I. 4. 3.
9. Sh. ०विवेश.
   In the VārŚr. ms. p. 127 धायापा प्रपीनमग्ने सलिलस्य and मधुमंतमूर्मिꣳ समुद्रयꣳ सदनमाविवेश have been corrected to धयापां प्रप्यानमग्ने सरिरस्य and मधुमंतमूर्वि समुद्रियꣳ सदनमाविशस्व.
10. MS. II. 10. 1.
11. MS. I. 3. 39.
12. Identical with MānGr. II. 2. 25.
13. Gdh. समाप्तौ क्रियमाणं कर्म अवभृथशब्दार्थः.
14. Sh. omits एतत्तन्त्रम्.
15. F. omits वाराह.
16. For प्रथमं खण्डं Sh. reads प्रथमः खण्डः सम्पूर्णः.

# [ अथ जातकर्म ]

प्राङ्मुखमुदङ्मुखं वा सूतिकालयं कल्पयित्वा ध्रुवं प्रपद्ये शुभं प्रपद्य आशां प्रपद्ये इति[1] काले प्रपादयेत् ॥ १ ॥ रेतो मूत्रमिति[2] च्यावनीभ्यां दक्षिणं[3] कुक्षिमभिमृशेत् । श्रावयेद्वा[4] ॥ २ ॥ पुत्रं जातमन्वक्षं स्नातं न मातोपहन्यादा मन्त्रप्रयोगात्[5] ॥ ३ ॥ अग्नेरभ्याहितस्य परिसमूढस्य परिस्तीर्णस्य पश्चादहते वाससि कुमारं प्राक्शिरसमुत्तानं संवेश्य पलाशस्य मध्यमं पर्णं[6] प्रवेष्ट्य तेनास्य कर्णावाजपेत्[7]—भूस्त्वयि दधानीति[8] दक्षिणे । भुवस्त्वयि दधानीति[8] सव्ये । स्वस्त्वयि दधानीति[8] दक्षिणे । भूर्भुवः स्वस्त्वयि दधानीति[8] सव्ये ॥[9] ४ ॥ अथैनमभिमन्त्रयेते[10]—

अश्मा भव परशुर्भव हिरण्यमस्तृतं[11] भव ।[12]
अङ्गादङ्गात्संभवसि हृदयादधि जायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥

इति ॥[13] ५ ॥ यत्र शेते तदभिमृशेत्[14]—

वेद ते भूमि हृदयं दिवि चन्द्रमसि श्रितम् ।
वेदामृतस्य देवा माहं पुत्र्यमघं रुदम्[15] ॥

1. Sh. omits आशां प्रपद्ये.
2. MS. III. 11. 6.
3. Sh. दक्षिण-.
4. Gdh. अथ वा प्रसवाभिमुखीं श्रावयेत्.
5. Gdh. जाते पुत्रे पिता सचैलं (v.1. सतैलं) स्नानमाचरेत् । स्नानात्पूर्वमशुचिर्न किं स्पृशेत् । स्नानादूर्ध्वम[-च्छि-]न्नायां नाड्यां जातकर्म कुर्यात्. Cf. PārGṛ. 1. 16. 3.
6. Sh. मध्यमपर्णं, E. मध्यं पर्णं.
7. Gdh. पलाशस्य मध्यपर्णं कर्ण्यें [कर्णयोः?] संवेष्ट्य कर्णौ पिधाय जपति. Cf. Bhār-Gṛ. I. 24: मध्यमं पलाशपलाशं संवेष्ट्य तेनास्य दक्षिणं कर्णमाजपति०.
8. All the Sūtra mss. except F. read दधामि. Gdh. दधाति, but in Dantodgamana दधानि.
9. Cf. MānGṛ I. 17. 6.
10. Sh. ०येत्, E. Gdh. ०यते.
11. The mss. variously ०श्रितं, ०श्रुत, स्त्वितं.
12. A. adds: वेदो वै पुत्रनामासि स जीव शरदः शतम् (But not in Gdh).
13. Cf. MānGṛ I. 17. 5; 18. 6.
14. Cf. PārGṛ 1. 16. 17: स यस्मिन् देशे जातो भवति तमभिमन्त्रयते, HirGṛ. II. 3. 8: ततः पाणी प्रक्षाल्य भूमिमालभते. But Gdh. : वेद ते इत्यस्य नाभिर्देवता, नाभिस्पर्शने विनियोगः,
15. Sh. F. भूमिर्हृ०.
16. Sh. G. Gdh. पुत्रमहं हृदम्, E.F. पुत्रमगं

इति ॥ ६ ॥ आज्यꣳसꣳस्कृत्य ब्रह्माणमामन्त्र्य समिधमाधायाघारावाघार्याज्यभागौ हुत्वा व्याहृतिभिश्चतस्र आज्याहुतीर्जुहुयात् । जयाभ्याताना नाꣳ राष्ट्रभृतश्चैके ॥ ७ ॥ काꣳस्ये चमसे वा ऽऽहुतिसंपातानवनीय तस्मिन्सुवर्णꣳ संनिघृष्य व्याहृतिभिः कुमारं चतुः प्राशयेत् । अत्यन्तमेके सुवर्णप्राशनमुदके निघृष्याऽऽ द्वादशवर्षतायाः ॥[4] ८ ॥ इषं पिन्व । ऊर्जं पिन्वेति स्तनौ [ प्रक्षाल्य ] प्रधापयेत् । दक्षिणं पूर्वꣳ सव्यं पश्चात् ॥[6] ९ ॥ स्विष्टकृते[7] हुत्वा प्रायश्चित्ताहुतीश्च समिधमाधाय पर्युक्षति ॥ १० ॥ एष कर्मान्तो बहिर्द्वारे ऽग्निर्नित्यः । कणसर्षपयवानाꣳहोमः । व्याहृतिभिर्जुहुयात् ॥[8] ११ ॥ अप्रतिरथं[9] जपेत् । इन्द्रो भूतस्येति[10] षडर्चं[11] च ॥ १२ ॥ सूतिकालयꣳ यथाकालꣳ समन्तादुदकेन परिषिञ्चेत् ॥ १३ ॥

इति वाराहगृह्ये द्वितीयं खण्डम्[12] ॥

ह्रदम्.
Ms. F. the best of our lot, supported by ms. E. suggests that the reading as emended above is the original one. Instead of अघं रुदं it reads अगं ह्रदं i. e. the aspiration in घं has been transferred to रु, which in its aspirated form ह्रु was written down as ह्र, the pronunciation of रु being identical with ऋ in Western India, to which locality all these mss. belong. The writer could conceive of no such written word as ह्रुदम्. In the other mss. अगं was further emended to अहं.

1. Sh. ब्राह्म०.

2. Gdh. राष्ट्रप्रभृत०.

3. Gdh. व्याहृतीनां...मेधाजनने विनियोगः। दक्षिणानामिकया सुवर्णान्तर्हितया कुमारं चतुः प्राशयति । ओं भूस्त्वयि प्राशय[-ामी-]ति । ...एवमायुष्करणं कुर्यात् । द्वादशवर्षं यावदेव भवेत्प्राशनमिति.

4. Cf. MānGṛ. I. 17. 4.

5. Gdh. ओमिषं पिन्वेत्यनेन दक्षिणं स्तनं प्रक्षाल्य तूष्णीं प्रधापनम् । ओमूर्जं पिन्वेत्यनेन [सव्यं] स्तनं प्रक्षाल्य [ तूष्णीं ] प्रधापनम्.

6. Cf. MānGṛ. I. 17. 7.

7. Sh. ०कृतं.

8. Gdh. सूतिकाबहिर्द्वार्येग्निं नित्यं भूसंस्कारमात्रं कृत्वा संस्थाप्य समित्प्रक्षेपपूर्वकं कणसर्षपद्रव्येण सायं प्रातः व्याहृतिभिर्होमं कुर्यात्.

9. Gdh. आशुः शिशानः (MS. II. 10. 4) इत्यप्रतिरथम्...

10. MS. IV. 14. 7.

11. E. षडृचं, G. षडरुचं.

12. Sh. ०गृह्यसूत्रे प्रथमः खण्डः, E. ०प्रथमं खण्डम्, F. गृह्ये०, G. वाराहसूत्रे गृह्ये०.

# [ अथ नामकरणम् ]

एवमेव दशम्यां कृत्वा पिता माता च पुत्रस्य नाम दध्याताम्[1]—घोषवदाद्यन्तरन्तस्थं, दीर्घाभिनिष्टोनान्तं, कृतं, न तद्धितं, द्व्यक्षरं चतुरक्षरं[2] वा[3], त्यक्त्वा पितुर्नामधेयात्[4], नक्षत्रदेवतेष्टनामानो वा ॥[5] १ ॥ द्विनामा तु ब्राह्मणः ॥ २ ॥ नामैव कन्यायाः—अकारव्यवधानमाकारान्तमयुग्माक्षरं नदीनक्षत्रचन्द्रसूर्यपूर्षदेवदत्तंरक्षितावर्जम् ॥[8] ३ ॥ नवनीतेन पाणी[9] प्रलिप्य सोमस्य त्वा द्युम्नेनेत्येनंमभिमृशेत् ॥ ४ ॥ सर्वेषु कुमारकर्मस्वाग्नेयः स्थालीपाकः प्राजापत्यो वा ॥ ५ ॥ सर्वत्रानादेशे ऽग्निः पुंसामर्यमा स्त्रीणाम् ॥[11] ६ ॥ संवत्सरं मातापितरौ न मांसमश्नीयाताम् ॥[12] ७ ॥

1. Gdh. अग्नेः पश्चात् माताङ्के पुत्रं गृहीत्वा उपविशेत् । उभौ वा । तयोरभावे भ्राताऽन्यो वा.
2. Sh. ०ष्ठा०. So also Baudh. (II. 1. 26), Pār. (I. 17. 2) and Hir. (II. 4. 10) Gṛhyasūtras. But Saṃskāraratnamālā considers it to be a corrupt reading: अभिनिष्ठान इति तु प्रमादपाठः (Ānandāśrama edit. p. 853-854).
3. Gdh. बिजे [बीज or बैज] वापः—पिता नाम करोति एकाक्षरं द्व्यक्षरं त्र्यक्षरं वा । चतुरक्षरमपरिमितं चेति.
   Baudh. (II. 1. 27) and other Gṛhyasūtras cite a vijñāyate-passage: अपि वा यस्मिन् स्वित्युपसर्गः स्यात् तद्धि प्रतिष्ठितमिति विज्ञायते.
4. Sh. त्यक्तपितृनामधेयात्.
   G. त्यक्त्वा पितृनामधेयं. So also Mān-Gṛ. I. 18. 2.
   In mss. E. F. and others the use of the ablative '०नामधेयात्' after त्यक्त्वा is analogous to the one in relation with the synonymous विना or ऋते. With this passage may be compared the त्रिपुरुषानूकं of a very ancient author quoted by Patañjali (Mbh. I. 1. 1): याज्ञिकाः पठन्ति—दशम्युत्तरकालं पुत्रस्य जातस्य नाम विदध्यात्... अवृद्धं त्रिपुरुषानूकमनरिप्रतिष्ठितं...Gopīnātha (Saṃskāraratnamālā, Ānandāśrama edit. p. 855) explains it thus: नामकर्तुस्त्रिपुरुषान् पितामहादीननुकायत्यभिधत्त इति त्रिपुरुषानूकम् । पितामहादित्रितयान्यतमं नाम कार्यमित्यर्थः.
5. Cf. MānGṛ. I. 18. 1, 2.
6. Sh. E. G. ०षा०.
7. G. ०ता[त्ता]०.
8. Cf. MānGṛ. I. 18. 1.
9. E. G. ०णिं.
10. MS. II. 6. 11.
11. Cf. MānGṛ. II. 10. 8.
12. Henceforth Sh. E. G. begin a fresh chapter. The colophons for this chapter are:
    Sh. इति वाराहगृह्ये द्वितीयः खण्डः, E. इति वाराहगृह्ये द्वितीयं खण्डम्, G. द्वितीयं.
    After नामकरण Gdh. introduces two more rites, viz. निष्क्रमण and

## [अथ दन्तोद्गमनं पुत्राभिमन्त्रणं च]

पुत्रस्य जातदन्ते[1] यजेताग्निं गवा पशुना[2] वा ॥ ८ ॥ विप्रोषितः प्रत्येत्य पुत्रस्य मूर्धानं त्रिराजिघ्रेत्—पशूनां त्वा हिङ्कारेणाभिजिघ्रामीति ॥[3] ९ ॥ जातकर्मवद्धस्ताङ्गुलिं[4] प्रवेष्टय तेनास्य कर्णावाजपेत् ॥ १० ॥ अथैनमभिमन्त्रयते—अश्मा भवेति ॥ ११ ॥

## [अथान्नप्राशनम्]

अग्निधन्वन्तरी पुत्रवती छागमेषाभ्यामिष्ट्वा दीर्घायाः[5] व्याहृतिभिः कुमारं चतुः प्राशयेत् । आयुर्दा देवेति[5] च ॥[6] १२ ॥

## [अथ सामान्यनियमाः[7]]

कुमारकर्माणि शुक्ल उदगयने पुण्ये[8] नक्षत्रे नवमीवर्जम् । सर्व ऋतवो विवाहे ऽमाघचैत्रौ[9] मासौ, परिहाप्योत्तरं च नैदाघम् ॥ १३ ॥ अन्वारम्भयित्वा हवनम् ॥ १४ ॥

इति वाराहगृह्ये तृतीयं खण्डम्[10] ॥

कर्णवेध.

1. Sh. जाते दन्ते.
2. Sh. ऽप॰. Cf. MānGṛ II. 9. 11.
3. Cf. MānGṛ I. 18. 6.
4. Sh. ॰र्लीं.
5. MS. IV. 12. 4.
6. Gdh. मधुरादीन्रसानादायान्यत्सर्वमन्तर्वर्णादि भाजन उद्धृत्य मातुरुत्सङ्गे स्थितं कुमारं कनकहस्तः पिता कुलदेवतासन्निधौ तां स्मृत्वा वा मधुशर्कराज्यसंयुक्तं हन्त इति व्याहृतिभिः प्राशयेत् ।...एतदनन्तरं धनशास्त्रवस्त्रादि संस्थाप्य तत्र कुमारं मातोत्सृजेत् । प्रथमं यत्स्पृशेत् तेनास्य जीविका ज्ञातव्या.
7. Gdh. includes the 13th and the 14th sūtra in the following ceremony, viz. चूडाकरण.
8. Sh. G. ॰ण्ये. Cf. MānGṛ. I. 21. 1.
9. For अमाघ॰ Sh. G. read माघ॰. अमाघ here stands for पौष, as Gdh. explains it: प्रावृट्शरदौ पौषचैत्रे वर्जयित्वा. Cf. ĀpGṛ. I. 2. 12: सर्वे ऋतवो विवाहस्य शैशिरौ मासौ परिहाप्योत्तमं च नैदाघम्. Cf. also BaudhGṛ. I. 1. 18, 19: सर्वे मासा विवाहस्य ॥ शुचितपस्तपस्यवर्जमित्येके, and BaudhGṛ. Paribhāshāsūtra I. 2. 13: संवत्सरो वै देवानामहोरात्रम् । तस्यैतदुदगयनमहः । ...तस्य प्रातःसङ्गवौ शिशिरवसन्तौ ॥ मध्यन्दिनं ग्रीष्मः । अपराह्णसायाह्ने वर्षाशरदौ । प्रातः सङ्गवे सायमिति विवाहं न कुर्वन्ति.
10. Sh. ॰तृतीयः खण्डः, E. G. वाराह॰, F. गृह्ये॰.

## [ अथ चूडाकरणम् ]

तृतीयवर्षस्य जटाः कुर्वन्ति । यथा वा कुलकल्पः ॥[1] १ ॥ अग्निमुपसमाधाय परिसमुह्य परिस्तीर्य पर्युक्ष्य[2] दक्षिणतो ऽग्नेर्ब्राह्मणमुपवेश्योत्तरत उदपात्रं[4] शमीशमकवत्[5] ॥ २ ॥ अथैनमभिमन्त्रयते — हिरण्यवर्णाः शुचयः[6] इति चतसृभिः । या ओषधयः[7] इत्यनुवाकेन ।

शं नो देवीरभिष्टय आपो भवन्तु पीतये ।
शं योरभि स्रवन्तु नः ॥
प्रियाः[8] शं न आपो धन्वन्याः शं नः सन्तु नूप्याः ।
शं नः समुद्रिया आपः शमु नः सन्तु कूप्याः ॥[9]
शं नो मित्रः शं वरुणः शं नो भवत्वर्यमा ।
शं न इन्द्रश्चाग्निश्च शं नो विष्णुरुरुक्रमः ॥

इति[10] । तासामुदकार्थान्कुर्वीत — पर्युक्षणे ऽभ्युन्दने स्नापने च ॥ ३ ॥ आज्यं संस्कृत्य ब्राह्मणमामन्त्र्य[3] समिधमाधायाघारावाघार्याज्यभागौ हुत्वा — अग्न आयूंषि पवसे[11] इति सप्तभिः सप्त हुत्वा[12] ॥ ४ ॥ आयुर्दा देवेति[13] च ।

ये केशिनः प्रथमे सत्त्रमासते[14] येभिरावृतं यदिदं विराजति ।
तेभ्यो जुहोम्यायुषे दीर्घायुत्वाय स्वस्तये ॥

1. Cf. MānGr. I. 21. 1.
2. Sh. places पर्युक्ष्य before परिस्तीर्य.
3. Sh. ब्राह्म०.
4. Sh. E. G. उदक०.
5. For शमीशमकवत् G. has शमिशमकपात्रं शमिशमकवद्.
6. MS. II. 13. 1.
7. MS. II. 7. 13.
8. AV. I. 6. 4, KS. II. 1, MānŚr. VI. 1. 5 omit प्रियाः.
9. AV. (ib.), KS. (ib.) and MānŚr. (ib.) read सन्त्वनू०.
10. Sh. does not give these three verses sakalapāṭhena, but gives only the pratīkas: शं नो देवीरभिष्टय इति शं न आपो धन्वन्या इति द्वाभ्याम् इति च. Gdh. उदकपात्रं शमीशमकवत् प्रतिष्ठाप्य हिरण्यवर्णा इति चतसृणां चतसृः, या ओषधयः, [...प्रियाः शन्नः], शन्नो मित्र इत्येषां कुम्भाभिमन्त्रणे विनियोगः.
11. MS. I. 3. 31. Gdh. Vas. पवसा, thus following the MS. rule of sandhi.
12. Sh. जुहुयात्, E. adds जुहुयात्.
13. MS. IV. 12. 4.
14. E. Vas. ०ते.

इति ॥ ५ ॥ व्याहृतिभिश्च[1] ॥ ६ ॥ उक्तः कर्मान्तः पूर्वेण ॥ ७ ॥ शीतेन वार्य उदकेनेधि । उष्णेन वार्य उदकेनेधीति तप्ता इतराभिः सꣳसृज्य—आर्द्रदानव स्थ जीवदानव स्थोन्दतीरिषमावदेत्यपो[3] ऽभिमन्त्र्य दक्षिणं केशान्तमभ्युन्द्यात्[4]—

अदितिः केशान्वपत्वाप उन्दन्तु जीवसे । दीर्घायुत्वाय स्वस्तये ॥

इति ॥[5] ८ ॥ दक्षिणस्मिन्केशान्ते दर्भमूर्ध्वाग्रं निदधाति[6] ॥ ९ ॥ ओषधे त्रायस्वैनमिति[7] दर्भमन्तर्दधाति ॥[8] १० ॥ स्वधिते मैनꣳ हिꣳसीरिति[9] क्षुरेणाभिनिदधाति ॥[10] ११ ॥

येनावपत्सविता क्षुरेण सोमस्य राज्ञो वरुणस्य विद्वान् ।
तेन ब्रह्माणो[11] वपतेदमस्यायुष्मानयं जरदष्टिर्यथासत् ॥ अहमसौ[12] ॥

इति प्रवपति ॥[13] १२ ॥ दक्षिणतो माताऽन्या वाऽविधवाऽऽनडुहेन गोमयेनाऽभूमिगतान्[14]केशान्परिगृह्णीयात् ॥[15] १३ ॥

मा ते केशाननुगाद्वर्च एतत्तथा धाता दधातु ते ।
तुभ्यमिन्द्रो वरुणो बृहस्पतिः सविता वर्च आदधुः ॥

इति प्रपततो[16] ऽनुमन्त्रयते ॥[17] १४ ॥ तेन धर्मेण पुनरपो ऽभिमन्त्र्यापरं केशान्तमभ्युन्द्यादुत्तरं च ॥ १५ ॥ अन्यौ तु प्रवपनौ—

1. Gdh. Vas. ततो जयादिंव्याहृतिहोमः पूर्ववत्कार्यः.
2. The mss. वा.
3. Thus the text mss., the Paddhatis ०मावदेदि०. The original was probably ०मावहते०.
4. Sh. puts दक्षिणं केशान्तमभ्युन्दति at the end of the sūtra.
5. Cf. MānGṛ. I. 21. 2, 3.
6. Sh. omits दक्षिणस्मिन्...निदधाति.
7. MS. III. 9. 3.
8. Sh. adds: दक्षिणस्मिन् केशान्ते ऊर्ध्वाग्रं.
9. Cf. MānGṛ. I. 21. 4.
10. Cf. MānGṛ. I. 21. 5.
11. E. Gdh. (v. l.) Vas. ब्रह्म०, G. ब्राह्म०.
12. Vas. अहममुकशर्माऽमुकगोत्रस्तव केशान् वपामीत्युक्त्वा पूर्वमंत्रं पठन्वपेत्.
13. Cf. MānGṛ. I. 21. 6.
14. Sh. गोमयेन आभू०, Sh. (v. l.) E. G. ०येन भू०. Cf. Gdh. Vas. भूमिस्पर्शरहितान्.
15. Cf. MānGṛ. I. 21. 9.
16. So also KāṭhGṛ. XL. 13; and the Paddhatis: पततः केशानभिमन्त्रयते (Vas. ०येत्).

Sh. E. G. प्रवपतो. So also the Mān. (I. 21. 8) and Baudh. (II. 4. 14) Gṛhyas. Thus also BaudhŚr. XVIII. 19.
17. Cf. MānGṛ. I. 21. 8.

येन पूषा बृहस्पतेरग्नेरिन्द्रस्य चायुषे ऽवपत् ।
तेन ते वपाम्यायुषे दीर्घायुत्वाय स्वस्तये ॥

इति पश्चात् ।

येन भूयश्चरात्ययं ज्योक्च पश्यसि[1] सूर्यम् ।
तेन ते वपाम्यायुषे दीर्घायुत्वाय सुश्लोक्याय सुवर्चसे ॥

इत्युत्तरतः ॥[2] १६ ॥

यत्क्षुरेण पर्चयता सुपेशसा वप्तर्वपसि केशान् ।
शुन्ध शिरो[3] मास्यायुः प्रमोषीः ॥

इति लोहायसं क्षुरं केशवापाय प्रयच्छति ॥[4] १७ ॥ यथार्थं केशयत्नान् कुर्वन्ति—दक्षिणतः कपर्दा[5] वसिष्ठानामुभयतो ऽत्रिभार्गवकाश्यपानां, पञ्चचूडा आङ्गिरसः[6], शिखिनो ऽन्ये[7] ॥ १८ ॥ वार्जिमेके मङ्गलार्थम् ॥[8] १९ ॥

त्र्यायुषं कश्यपस्य जमदग्नेस्त्र्यायुषमगस्त्यस्य त्र्यायुषम् ।
यद्देवानां त्र्यायुषं तन्मे अस्तु शतायुषम् ॥

इति शिरः संमृशति ॥ २० ॥ परिगृह्य गोमयेन केशानुत्तरपूर्वस्यां गृहस्य भूम्यामन्तरा गेहात्पलदं च[11] निदध्यात् । अरिक्ते[12] वा वपने[13] ।

1. Sh. G. Vas. °ति.
2. Cf. MānGṛ. I. 21. 6.
3. Except F. all the text and Paddhati mss. insert मुखं after शिरो. This insertion is not very appropriate for the tonsure of a three years old child; he has neither beard nor moustaches. The MānGṛ. (I. 21. 14) explicitly ordains that the word मुखं be inserted in the verse under question only when it is used for the Godāna.
4. Cf. MānGṛ. I. 21. 7.
5. Sh. °र्दो.
6. Sh. °चूडाङ्गिरसां.
7. Gdh. अन्येषामेकैव। तां यत्र क्वचन कुर्वन्ति.
8. For शिखिनो ऽन्ये (sūtra 18) and वाजि° A. reads: शिखान्येषामेकेति.
9. Cf. KāṭhGṛ. XL. 7 : मङ्गलार्थं शिखिनो ऽन्ये and on it the Vivaraṇa of Ādityadarśana: अमेध्यं वा एतच्छिरो यदशिखम्. Cf. also Saṃskārakaustubha p. 115b: वार्जिं ललाटकर्णमूलस्पर्शिनीं मालामिव केशपंक्तिं मंगलार्थं कुर्वन्ति.
10. Sh. त्र्यायुषं जमदग्नेः कश्यपस्य.
11. Sh. omits च.
12. Sh. E. (sec. m. sup. lin.) G. अति°, A. अरिक्तेन.
13. Vas. गृहस्येशानदिग्भागे गर्तायां निदध्यात् । गेहाभ्यन्तरा गर्ते वा । अरिक्ते वा पूर्णे भाण्डे निक्षिपेत्.

उप्त्वाय केशान्वरुणाय[1] राज्ञो बृहस्पतिः सविता विष्णुरिन्द्रः ।
तेभ्यो निधानं महदन्वविन्दन्नन्तरा द्यावापृथिवी अप स्वः[2] ॥

इति ॥[3] २१ ॥ कर्त्रे वरं ददाति ॥[4] २२ ॥ पक्वमगुणं तिलपिशितं च केशवापाय प्रयच्छति ॥[4] २३ ॥ सम्वत्सरं माता नाम्लाय धारयेत् । रोषाय नाश्नीयात् । लवणवर्जं तूष्णीम् ॥ २४ ॥ कन्याया आहुतिवर्जम् ॥ २५ ॥ विदुषो ब्राह्मणानर्थसिद्धिं वाचयेत् ॥ २६ ॥ एवमुत्तरेषु ॥ २७ ॥

इति वाराहगृह्ये चतुर्थं खण्डम्[5] ॥

---

## [ अथोपनयनम् ]

गर्भाष्टमेषु[6] ब्राह्मणमुपनयेत् । षष्ठे सप्तमे पञ्चमे वा ॥[7] १ ॥ ततो गर्भैकादशेषु क्षत्रियं, गर्भद्वादशेषु वैश्यम् ॥ २ ॥ प्राक्षोडशाद्वर्षाद् ब्राह्मणस्यापतिता सावित्री, द्वाविंशात्क्षत्रियस्य, चतुर्विंशाद्[9] वैश्यस्य । अत ऊर्ध्वं पतितसावित्रिका[10] भवन्ति । नैनान्याजयेयुर्नाध्यापयेयुर्न विवहेयुर्न विवाहयेयुः[11] ॥ ३ ॥ अभ्यन्तरं जटाकरणं बहिरुपनयनम् ॥ ४ ॥ उक्तो ऽग्निसंस्कारो ब्राह्मणश्च[12][13] ॥ ५ ॥ कुमारं[14] पर्युप्तिनं स्नातमभ्यक्तशिरसमुपस्पर्शनकल्पे-

1. Sh. °णस्य.
2. Sh. °पृथिव्योरवन्युः, Sh. (v. l.) °पृथिवीं अप्सु, E, Gdh. °पृथिवी अप्स्वः G. Vas. पृथिवी अप्सुः,
3. Cf. MānGṛ. I. 21. 10.
4. Cf. MānGṛ. I. 21. 12.
5. Sh. °चतुर्थः खण्डः, E. वाराह°, F. गृह्ये°, G. गृह्ये तृतीयं.
6. Sh. °ष्टमे.
7. Cf. MānGṛ. I. 22. 1.
8. Sh. आद्विंशात्, E. आ द्वा°.
9. Excepting G. other mss. आ चतु°.
10. Sh. °त्री°.
11. Sh. omits न विवाहयेयुः.
12. G. ब्रा°.
13. Sh. E. read ब्राह्मणस्य and join it to कुमारं in the next sūtra, but the ceremony that follows is nowhere ordained to pertain to a Brāhmaṇa kumāra alone.
14. After कुमा one leaf is missing in F. upto °मसाविति (sūtra 17).

नोपस्पृष्टमग्नेर्दक्षिणतो ऽवस्थाप्य दधिक्राव्णो अकारिषमिति दध्नः कुमारं[3] त्रिः प्राशयेत् ॥[4] ६ ॥

ईयं दुरुक्तात्परिबाधमाना वर्णं[5,6] पवित्रं पुनती न आगात् ।
प्राणापानाभ्यां बलमाभजन्ती शिवा देवी सुभगा मेखलेयम् ॥
ऋतस्य गोप्त्री तपसस्तरुत्री[7] घ्नती रक्षः सहमाना अरातीः ।
सा मा समन्तमनुपर्येहि भद्रे धर्तारस्ते सुभगे मेखले मा रिषाम ॥

इति मौञ्जीं त्रिगुणां त्रिः परिवीतां मेखलामाबध्नीते[8] । मौर्वी धनुर्ज्या क्षत्रियस्य, शाणी[?] वैश्यस्य ॥[9] ७ ॥ उपवीतमसि यज्ञस्य त्वोपवीतेनोपव्ययामीति[10] यज्ञोपवीतम्[11] ॥ ८ ॥

या अकृन्तन्[12] अतन्वन्या अवायन्या अवाहरन् ।
याश्चाग्नाः[13] देवीरन्तानभितो[14] ऽतन्वते[15] (?) तास्त्वा[16] देवीर्जरसे सव्ययन्ताम्[17] ॥
आयुष्मानयं परिधत्त[18] वासः परिधत्त वर्चः ।

1. E. inserts कुमारं before अग्नेः, G. omits अग्नेः.
2. MS. I. 5. 1. Before the verse E. G. insert : दधिक्राव्णो अकारिषमिति वामदेव ऋषिः त्रिष्टुप्छन्दः सुरभिर्देवता, दधिप्राशने विनियोगः. These details are neither completely supplied by Gdh. nor by Vas.
3. For दध्नः कुमारं Sh. reads कुमारं दधि.
4. Cf. MānGṛ. I. 22. 3.
5. Before this verse E. G. read : इयं दुरिक्तादिति, [ ऋतस्य ] गोप्त्री [ इति ] द्वयोर्मन्त्रयोः वामदेव ऋषिः त्रिष्टुप्छन्दः मेखला मरुतो देवता मेखलाबन्धने विनियोगः.
6. The mss. वरुणं.
7. Sh. तपसश्चरित्री, E. ०स्तरत्री, G. Gdh. Vas. ०स्तरित्री.
8. Sh. ०त.
9. Cf. MānGṛ. I. 22. 7, 8, 10.
10. After this verse E. G. add : यज्ञोपवीतमिति मंत्रस्य परमेष्ठी प्रजापतिः ऋषि ...यज्ञोपवीतं परमं पवित्रं...यज्ञोपवीतं बलमस्तु तेजः (The last verse is not given by Gdh.).
11. E. G. omit यज्ञोपवीतम्.
12. Sh. ०न्त०.
13. Other variants suggest ०ग्न्या.
14. Sh. here and next pāda देव्यो.
15. The mss. suggest ततन्थ.
16. Only Sh. तास्त्वा, other mss. तास्ता.
17. Sh. संव्ययन्तु.
After संव्ययन्तां Vas. adds: इति कटिसूत्रं । ततः वस्त्रः । आयुष्मान् इत्येतयोः मंत्रयोः...वस्त्रपरिधाने विनियोगः. In E. the particulars beginning with आयुष्मान् have been added on the margin by a late hand.
18. Sh. आयुष्मन्निदं परिधत्स्व.

शतायुषं कृणुहि दीर्घमायुः[1] ॥
शतं च[2] जीव शरदः पुरूचीर्वसूनि चाय्यो[3] विभजाय जीयान्[4] (?) ॥[5]
इत्यहत[6] वास आच्छाद्य
मित्रस्य[7] चक्षुर्धरुणं[8] बलीयस्तेजो यशस्वि स्थविरं च धृष्णु[9] ।
अनाहनस्य[10] वसनं चरिष्णुं परीदं[11] वाज्यं वाजिनं[11] दधे ऽहम् ॥
इति कृष्णाजिनं च[12] ॥[13] ९ ॥ आज्यं संस्कृत्य ब्राह्मणमामन्त्र्य समिधमाधायाघारावाघार्याज्यभागौ हुत्वाऽष्टौ जटाकरणीयाञ्जुहुयात् ॥ १० ॥ व्याहृतिभिश्च ॥ ११ ॥ उक्तः कर्मान्तः पूर्वेण ॥ १२ ॥ कालाय[14] वां गोत्राय वां जैत्राय वामौद्भेत्राय वामन्नाद्याय वामवनेनिजे[15]दित्युदकेनाञ्जलिं पूरयित्वा[16] सुकृताय वामिति[17] पाणी प्रक्षाल्य इदमहं[18] दुर्यमन्या निष्प्लावयामीत्याचम्य निष्ठीवति ॥ १३ ॥ भ्रातृव्याणां सपत्नानामहं भूयासमुत्तम इति द्वितीयम् ॥ १४ ॥
प्रातर्जितं[18] भगमुग्रं हुवेम वयं पुत्रमदितेर्यो विधर्ता ।
आध्रश्चिद्यं मन्यमानस्तुरश्चिद्राजा चिद्यं भगं भक्षीमहीत्याह ॥
इत्यादित्यमुपतिष्ठेत ॥ १५ ॥ ब्रह्मचर्यमुपागामुप मा ह्वयस्वेति ब्रूयात् ॥१६॥ एहि ब्रह्मोपेहि ब्रह्म ब्रह्म त्वा स ब्रह्म[19] सन्तमुपनयाम्यहमसाविति ॥ १७ ॥ अथास्याभिवादनीयं नाम गृह्णाति ॥[20] १८ ॥ देवस्य ते[21] सवितुः प्रसवे ऽश्वि-

1. Sh. omits कृणुहि; E. has दीर्घायुत्वा.
2. Gdh. omits च.
3. G. Vas. चाज्यो, Gdh. चामी.
4. Gdh. जीयात्.
5. Vas. शतं च जीवेत्यधिवासं दद्यात्.
6. E. (margin sec. m.) G. supply the ऋष्यादि and विनियोगान्त details first.
7. Sh. ०रु०, and further omits च.
8. Sh. समिद्धं (v. l. दिष्ठयं), G. धिष्ण्यं.
9. All the mss. आ०.
10. Sh. जरिष्णुं, B. च शुष्मं, G. चरुष्णुं.
11. For वाज्यं वाजिनं Sh. reads वाज्यजिनं.
12. E. G. omit इति कृष्णाजिनं च, though they have कृष्णाजिनधारणे विनियोगः. Gdh. Vas. omit मित्रस्य चक्षुः...कृष्णाजिनं च.
13. Cf. MānGr. I. 22. 3.
14. Sh. ब्राह्म०.
15. Sh. ०निजेमी०.
16. E. G. omit इत्यु०...पूरयित्वा.
17. MS. I. 1. 4.
18. Gdh. ततो.
19. Sh. Gdh. सं ब्रह्म; Vas. omits स ब्रह्म.
20. Cf. MānGr. I. 22. 5.
21. Sh. G. Vas. त्वा.

नोर्बाहुभ्यां पूष्णो हस्ताभ्यां[1] हस्तं गृह्णाम्यहमसावित्यस्य हस्तं दक्षिणेन दक्षिणमुत्तानमभीवाङ्गुष्ठमभीव लोमानि[2] गृह्णीयात् ॥[3] १९ ॥

मामेवान्वेतु[4] ते मनो मामेवापि त्वमन्विहि ।

अग्नौ घृतमिव दीप्यतां हृदयं तव यन्मयि ॥

इत्येनं प्रेक्षमाणं[5] समीक्षते ॥ २० ॥ पृष्ठतोऽस्य पाणिमन्ववहृत्य[6] हृदयदेशमन्वारभ्य जपेत्[7]—प्राणानां ग्रन्थिरसि स[8] मा विस्रसदिति[9] । ब्रह्मणो ग्रन्थिरसीति नाभिदेशम् ॥[10] २१ ॥

गणानां त्वा गणपतिं हवामहे[11] कविं कवीनामुपमश्रवस्तमम्[12] ।

ज्येष्ठराजं ब्रह्माणं[13] ब्रह्मणस्पत आ नः शृण्वन्[14]नूतिभिः सीद सादनम् ॥

इति प्रदक्षिणमग्निं परिणयेत् ॥ २२ ॥ पश्चादग्नेर्दर्भेषूपविशति दक्षिणतश्च ब्रह्मचारी ॥ २३ ॥ अधीहि भो इत्युपविश्य जपति ॥ २४ ॥ प्रभुज्य दक्षिणं जानुं पाणी संधाय दर्भहस्तावोमित्युक्त्वा व्याहृतीः सावित्रीं चानुब्रूयात् । एवं काण्डानुवचनेषु ॥[15] २५ ॥ तत्सवितुर्वरेण्यमिति[16] गायत्रीं ब्राह्मणाय । आ देवो यातु[17] सविता सुरत्न[18] इति त्रिष्टुभं क्षत्रियाय । युञ्जते मन[19] इति जगतीं वैश्याय । पच्छोऽर्धर्चशः सर्वामन्ततः ॥ २६ ॥ पालाशं दण्डं ब्राह्मणाय प्रयच्छति, नैयग्रोधं क्षत्रियायाश्वत्थं वैश्याय । सुश्रवः सुश्रवसं मां कुरु । यथा त्वं सुश्रवः सुश्रवा अस्येवमहं[20] सुश्रवः सुश्रवा भूयासम् ।

1. For देवस्य ते...हस्ताभ्यां Sh. reads देवस्य त्वेति (MS. I. 1. 2).
2. Sh. °माभि वाङ्गुष्ठमभि वा लोमानि, A. E. °मभिवलोमानि नाम, G. Gdh. Vas. मभिवाङ्गुष्ठमभिव लोमानि (Gdh. लोमानं).
3. Cf. MānGṛ. I. 22. 5.
4. E. (margin sec. m.) and G. give the ऋष्यादि and विनियोगान्त details first.
5. Sh. E. G. संप्रे°.
6. Sh. E. G. °मन्वाहृ°.
7. Sh. जपति.
8. Sh. adds ते.
9. Thus Gdh., other mss. °स्रंस°.
10. Cf. MānGṛ. I. 22. 6.
11. G. adds: निधीनां त्वा निधिपतिं हवामहे.
12. Some mss. उप मयि for उपम.
13. Sh. ब्रह्मणां. So also ṚV. II. 23. 1.
14. Sh श्रृ°. So also ṚV. ib.
15. Cf. MānGṛ. I. 22. 13.
16. MS. IV. 10. 3.
17. Sh. E. G. याति.
18. MS. IV. 14. 6.
19. MS. I. 2. 9.
20. G. adds मनुष्याणां.

यथा त्वं देवानाꣳ वेदस्य निधिगोपो ऽस्येवमहं मनुष्याणां ब्रह्मणो निधिगोपो भूयासमिति[1] प्रतिगृह्णाति[2] ॥[3] २७ ॥ ऊर्ध्वकपालो ब्राह्मणस्य कमण्डलुः, परिमण्डलः क्षत्रियस्य, निचल्कलो[4] वैश्यस्य ।

इमा आपः[5] प्रभराम्ययक्ष्मा[6] यक्ष्मचातनीः ।

ऋतेनापः प्रभराम्यमृतेन सह्यायुषा ॥

इति प्रतिगृह्णामीति प्रतिगृह्य भैक्ष्यैचर्यं चरेत् – भवति[8] भिक्षां देहीति ब्राह्मणः, भवतिमध्यां क्षत्रियः, भवत्यन्त्याꣳ[9] वैश्यः । चतस्रः षडष्टौ वाऽविधवा अप्रत्याख्यायिन्यः । मातरं प्रथममेके ॥[10] २८ ॥ गुरवे निवेद्य[11] ॥ २९ ॥ वाग्यतः प्राग्ग्रामात्संध्यामासेत[12] । तिष्ठन्पूर्वाम् । सावित्रीं त्रिरधीत्य

अध्वनामध्वपते[13] स्वस्त्यस्याध्वनः पारमशीय ॥[14]

या मेधा अप्सरःसु गन्धर्वेषु च यन्मनः ।

या मेधा दैवी मानुषी[15] सा मामाविशतामिहै[16] ॥

इति[17] ॥[18] ३० ॥ प्रत्येत्याग्निं परिचरेत् । इमꣳ स्तोममर्हते[19] इति परिसमूहेत् । एधो ऽस्येधिषीमहीति[20] समिधमादधाति । समिदसि समेधिषीमहीति[20]

1. Sh. E. G. add दण्डं.
2. G. प्रतिगृह्णामि [ इति ] प्रतिगृह्य ( Cf. प्रतिगृह्णामीति प्रतिगृह्य in the next sūtra).
3. Cf. MānGṛ. I. 22. 17.
4. Sh. ०चलकलो, B. ०चलको.
5. E. (margin sec. m.) and G. give the ऋष्यादि and विनियोगान्त details first.
6. Sh ०यक्ष्माय, E. F. ०यक्ष्म्या.
7. G. ०क्षु०.
8. In Sh. E. G. भवति is preceded by ॐ.
9. Sh. E. G. ०न्तां.
10. Cf. MānGṛ. I. 22. 20.
11. Vas. भिक्षां गुरवे निवेदयति. Cf. MānGṛ. I. 22. 21.
12. Sh. ०मुपास्ते.
13. Sh. adds श्रेष्ठयः. Cf. Vas. अध्वनामध्वपत इति सवितारं प्रणम्य.
14. After this verse Sh. adds: तच्चक्षुर्देवहितं पुरस्ताच्छुक्रमुच्चरत् । पश्येम शरदः शतं जीवेम शरदः शतं शृणुयाम शरदः शतं । प्रब्रवाम शरदः शतं अदीनाः स्याम शरदः शतं । भूयश्च शरदः शतात्.
15. Sh. दैवी या मानुषी मेधा.
16. Sh. E. ०मिहै( E. हे )व.
17. E. omits इति.
18. Cf. MānGṛ. I. 22. 11.
19. MS. II. 7. 3.
20. MS. I. 3. 39.

द्वितीयाम् ॥[1] ३१ ॥ अपो[2] अद्यान्वचारिषमित्युपतिष्ठते ॥[5] ३२ ॥ तं[6] मा सꣳसृज वर्चसेति[4] मुखं परिमृजीत ॥[7] ३३ ॥

यदग्ने तपसा तपो ब्रह्मचर्यमुपेमसि ।
प्रियाः श्रुतस्य भूयास्मायुष्मन्तः सुमेधसः ॥
अग्ने समिधमहारिषं बृहते जातवेदसे ।
स मे श्रद्धां च मेधां च जातवेदाः प्रयच्छतु ॥ स्वाहा ॥

इति समिधमादधाति ॥ ३४ ॥ तेजसा मा समङ्ग्धि वर्चसा मा समङ्ग्धि ब्रह्मवर्चसेन मा समङ्ग्धीति मुखं परिमृजीत ॥ ३५ ॥ आयुर्धा अग्ने ऽसीति[10] यथारूपं गात्राणि संमृशति ॥[11] ३६ ॥ इह धृतिरिति[12] पर्यायैरꣳसं ग्रीवाश्चार्चिरालभ्य[13] रुचं नो धेहीति[14] ललाटमभिमृशेत् ॥[15] ३७ ॥ आद्यन्तयोः पर्युक्षणम् ॥ ३८ ॥ गुरवे ब्रह्मणे च वरमुत्तरासङ्गं च ददाति ॥ ३९ ॥ द्वादशरात्रमक्षारलवणमाशेत् ॥ ४० ॥ अक्षारमेके ॥ ४१ ॥ व्युष्टे[16] द्वादशरात्रे षड्रात्रे वा[17] ग्रामात्प्राचीꣳ वोदीचीꣳ वा दिशमुपनिष्क्रम्य पश्चात्पला[18]शस्य यज्ञीयस्य[19] वा वृक्षस्य[20] सावित्रेण स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृतो मेखलां दण्डं चाप्सु प्रास्येत् ॥ ४२ ॥ तत्रैव हवि-

1. Cf. MānGṛ. I. 1. 16.
2. Sh. E. G. Vas. आ॰
3. F. ॰न्वा॰.
4. MS. I. 3. 39.
5. Identical with MānGṛ. I. 1. 17.
6. Sh. omits तं.
7. Cf. MānGṛ. I. 1. 18.
8. Sh. G. भूयासमायु॰, E. F· भूया आयु॰.
9. MS. I. 5. 2.
10. Sh. E. G. add च.
11. Identical with VārŚr. ms. p. 52.
12. MS. III. 12. 4.
13. Sh. पर्यायैः अंसग्रीवाश्च त्रिरा॰. Cf. VārŚr. ms. p. 52 : ध्रुवा असीति पृथिवीमभिमृश्यार्चिरालभ्य चक्षुषी आलभेत.
14. MS. III. 4. 8.
15. Cf. MānGṛ. I. 1. 22, 23.
16. With this sūtra Vas. begins a new section अथ सावित्रीव्रतोद्दीक्षणं, and explains it as सावित्रीव्रतोत्सर्गः तस्योद्दीक्षणमपरं नाम.
17. Here E. G. conclude the khaṇḍa: इति वाराहगृह्ये पंचमं खण्डम्. In F. the text runs continuously after वा, though on the margin it also has: इति वाराहगृह्ये पंचमः खण्डः (contrary to the usual neuter खण्डम्).
18. Sh. E. G. पा॰.
19. Sh. G. ॰ज्ञि॰.
20. Some mss. ॰क्ष्य॰.

श्शेषं भुञ्जीतेति श्रुतिः[1] ॥ ४३ ॥

इति वाराहगृह्ये पञ्चमं खण्डम्[2] ॥

---

# [ अथ व्रतानि ]

उपनयनप्रभृति व्रतचारी स्यात् ॥[3] १ ॥ उपनयनेन[4] व्रतादेशा व्याख्याताः ॥ २ ॥ मार्गवासाः, सꣳहतकेशः, भैक्षाचर्यवृत्तिः,[5] सशल्कदण्डः, ससमौञ्जीं मेखलां धारयेद्, आचार्यस्याप्रतिकूलः, सर्वकारी ॥[6] ३ ॥ यदेनमुपेयात्तदस्मै दद्यात् । बहूनाꣳ येन सꣳयुक्तः ॥[7] ४ ॥ नास्य शय्यामाविशेत् ॥[8] ५ ॥ न रथमारोहेत् ॥[9] ६ ॥ न सꣳवसेत्[10] ॥[11] ७ ॥ न विहारार्थो जल्पेत् ॥[12] ८ ॥ न रुच्यर्थः[13] कञ्चनं[14] धारयेत् ॥[15] ९ ॥ सर्वाणि साꣳस्पर्शकानि[16] स्त्रीभ्यो वर्जयेत् ॥[17] १० ॥ न स्नायादण्डवत् ॥[18] ११ ॥ नोदकमभ्युपेयात् ॥[18] १२ ॥ न दिवा स्वपेत् ॥ १३ ॥ त्रैविद्यकं ब्रह्मचर्यं चरेत् ॥ १४ ॥

1. The VārŚr. Par. Gṛhyapurusha kh. 1. p. 185 and MānGṛ. II. 3. 14 have respectively the variants कर्तव हविश्शेषं० and ब्राह्मण एव हविश्शेषं०.
2. F. गृह्ये०, Sh. ०पञ्चमः खण्डः, E. ०षष्ठमं खण्डं संपू०.
3. Identical with MānGṛ. I. 1. 1.
4. Sh. E. G. ०नयने.
5. F. ०चा०.
6. Cf. MānGṛ. I. 1. 2.
7. Identical with MānGṛ. I. 1. 3.
8. Identical with MānGṛ. I. 1. 4.
9. Identical with MānGṛ. I. 1. 6.
10. Sh. संविशेत्, Gdh. संवत्सयेत्. So also MānGṛ. I. 1. 5.
11. Cf. MānGṛ. (ib.).
12. Identical with MānGṛ. I. 1. 9.
13. Sh. ०र्थं. So also MānGṛ. I. 1. 10.
14. Thus E. G. Other mss. कंचन. Cf. MānGṛ. (ib.) किंचन.
15. Cf. MānGṛ. (ib.).
16. E. ०स्पर्शिका०, F. ०स्प्रर्शुका०.
17. Identical with MānGṛ. I. 1. 11.
18. Cf. MānGṛ. I. 1. 13, 14, KāṭhGṛ. I. 21-23. Cf. Gdh. न स्नायात् । दण्डवदुदकमभ्युपेयात्.

इन्द्रियसंयतः सायं प्रातर्भैक्ष्यवृत्तिः[1] ॥ १५ ॥ सायं प्रातरग्निं परिचरेत् ॥ १६ ॥ अधश्शायी[2], आचार्याधीनवृत्तिः[3], तन्निसर्गादशनम्[4], अयाचितं लवणम्[5] ॥ १७ ॥ वाग्यतोऽश्नीयात् ॥ १८ ॥ मधुमांसे वर्जयेत् ॥[6] १९ ॥ अच्छिन्नवस्त्रां[7] विवृतां स्त्रियं[8] न पश्येत् ॥[9] २० ॥ यौप्यं[10] स्य वृक्षस्य[11] दण्डी स्यात् ॥ २१ ॥ नानेन प्रहरेद्धवे न ब्राह्मणाय ॥ २२ ॥ न नृत्यगीते गच्छेत् ॥ २३ ॥ न चैने कुर्यात् ॥ २४ ॥ नावलिखेत् ॥ २५ ॥ शिखाजटः सर्वजटो वा स्यात् ॥[12] २६ ॥ शाणीक्षौमाजिनवासाः[13] ॥ २७ ॥ रक्तं वसनकम्बलम्[14]—ऐणेयं ब्राह्मणस्य, रौरवं क्षत्रियस्य, आजं वैश्यस्य ॥ २८ ॥ एतेन धर्मेण द्वादशवर्षाण्येकवेदे ब्रह्मचर्यं चरेत् । चतुर्विंशति[15] द्वयोः, षट्त्रिंशति[16] त्रयाणाम्, अष्टाचत्वारिंशति[16] सर्वेषाम् । यावद् ग्रहणं वा ॥[17] २९ ॥ मलज्जुरबलः कृशः[18] स्नात्वा स सर्वं लभते[19] यत्किञ्चिन्मनसेप्सितमिति[20] ॥[17] ३० ॥ एतेन धर्मेण साध्वधीते ॥[21] ३१ ॥ मन्त्रब्राह्मणान्यधीत्य कल्पं मीमांसां च याज्ञिकोऽधीत्य वक्त्रं पदं स्मृतिं चै-

1. Sh. ०भैक्षाचर्य०, E. G. ०भैक्षाचार्य०.
2. Sh. E. G. ०श्शय्या.
3. E. G. add: तादाचार्यस्याधी (G. धि)नः.
4. Cf. MānGṛ. I. 22. 21 : आचार्याय भैक्षमुपकल्पयते । तेनानुज्ञातो भुञ्जीतेति श्रुतिः.
5. Sh. अयाचितमलवणम्. But compare Gdh. लवणं न याच्यम्.
6. Cf. MānGṛ. I. 1. 12.
7. Sh. आच्छिन्न०, E. G. Gdh. अछि०.
8. E. स्त्रीं.
9. Cf. MānGṛ. I. 1. 8.
10. Sh. यौप०.
11. F. ०क्ष्य०.
12. Cf. MānGṛ. I. 2. 6.
13. Sh. शाणं क्षौममजिनं वासः.
14. Sh. रक्तं वसनं । कम्बलं.
15. F. ०र्तिं.
16. Sh. त्रिंशत् and अष्टचत्वारिंशत्.
17. Cf. MānGṛ. I. 2. 6.
18. Sh. सरज्जुरलंकृतकुशः, E. सरज्जुनलंकृकूश, F. मलं सुरवलः कृशः, G. मरजुनलंकृतः कुश, Gdh. मल्जुर्मलदिग्धजानुः ...अबलः कृशः. The reading as emended above is from the Mān. (I. 2. 6) and the KāṭhGṛ. (II. 4). The reading of F. stands by itself and might be construed thus: सः [ शरीरेण ] कृशः [ अपि ब्रह्मवर्चसा ] सुरवलः मलं स्नात्वा सर्वं लभते०.
19. Sh. लभेत.
20. E. omits इति.
21. Identical with MānGṛ. I. 2. 7.

च्छिकः (?) ॥ ३२ ॥ तौ स्नातकौ ॥ ३३ ॥ श्रोत्रियो ऽन्यो वेदपाठी । न तस्य स्नानम् ॥[2] ३४ ॥ उपविश्याचमनं विधीयते । अन्तर्जानु बाहूं[3] कृत्वा त्रिराचामेत् ॥ ३५ ॥ द्विः परिमृजेत् । खानि चोपस्पृशेच्छीर्षण्यानि ॥ ३६ ॥

इति वाराहगृह्ये षष्ठं खण्डम्[5] ॥

---

# [ अथ वेदव्रतानि ]

अथ चातुर्होतृकी दीक्षा संवत्सरम् ॥[6] १ ॥ आघारावाघार्याज्यभागौ हुत्वा चतुर्होतॄन्स्वकर्मणो[7] जुहुयात् । सह पञ्चहोत्रा षड्ढोत्रा च[8] सप्तहोतारमन्ततः ॥[9] २ ॥ हुत्वा व्रतं प्रदायादितो द्वावनुवाकावनुवाचयेत् ॥[10] ३ ॥ अथाग्निव्रताश्वमेधिकी दीक्षा संवत्सरं द्वादशरात्रं वा ॥[11] ४ ॥ आकूतमग्निमिति[12] षड्ढुत्वा व्रतं प्रदायादितो ऽष्टावनुवाकाननुवाचयेत् ॥[13] ५ ॥ त्रिषवणमुदकमाहरेत्त्रींस्त्रीन्कुम्भान् ॥[14] ६ ॥ त्रींश्च समित्पूलान् ॥ ७ ॥ भस्मनि शयीत करीषे सिकतासु भूमौ वा ॥[16] ८ ॥ नोदकमभ्युपेयात् ॥ [17] ९ ॥ सं-

1. Thus Sh. Other mss. चौच्छिकः.
2. Cf. MānGṛ. I. 2. 10.
3. E. G. ०हुं.
4. F. ०च०.
5. F. G. गृह्ये०, Sh. ०षष्ठः खण्डः, E. ०सप्तमं खण्डं.
6. Cf. MānGṛ. I. 23. 1.
7. Sh. ०कर्मणे.
8. Sh. E. G. omit च.
9. Cf. MānGṛ. I. 23. 2. In MānGṛ. अन्ततः is to be joined with सप्तहोतारम्.
10. Cf. MānGṛ. I. 23. 3.
11. Cf. MānGṛ. I. 23. 5, 14.
12. MS. II. 7. 7.
13. Cf. MānGṛ. I. 23. 6, 7.
14. Identical with MānGṛ. I. 23. 8.
15. Sh. ०त्फ०. The त्पु of the mss. has been wrongly read as त्फ.
16. Cf. MānGṛ. I. 23. 9.
17. Cf. MānGṛ. I. 23. 10.

वत्सरे समाप्ते घृतवतापूपेनाग्निमिष्ट्वा वात्सप्रं[1] वाचयेत् ॥[1] १० ॥ स्मार्तेन यावदध्ययनं काण्डव्रतविशेषा[2] होमार्थ(?)श्चाद्यन्तयोर्जुहुयात्[3] ॥ ११ ॥ अथैनं परिददीर्त[4]—अग्नये त्वा परिददानि[5] । वायवे त्वा परिददानि[5] । सूर्याय त्वा परिददानि[5] । प्रजापतये त्वा परिददानीति[5] ॥ १२ ॥ एतेनैवाश्वमेधो व्याख्यातः ॥ १३ ॥ नवमेनानुवाकेन हुत्वा दशमेनोपतिष्ठेत ॥[6] १४ ॥ अश्वाय घासमुदकस्थानमुदकं चाभ्युपेयात् ॥[7] १५ ॥ एताभ्यामेव मन्त्राभ्यां त्रैविद्यकं व्रतमुपेयात् ॥ १६ ॥ रहस्यमध्येष्यतां प्रवर्ग्यः ॥[8] १७ ॥ तस्य रहस्ये[10] व्रतोपायनं समिन्मन्त्रश्च ॥ १८ ॥ तिष्ठेदहनि रात्रावासीत वाग्यतः ॥ १९ ॥ पर्वसु चैवं स्यात् ॥ २० ॥ सर्वजटश्च स्यात् ॥ २१ ॥ संवत्सरावरः[11] प्रवर्ग्यो भवति ॥ २२ ॥

इति वाराहगृह्ये सप्तमं खण्डम्[12] ॥

---

1. Cf. MānGṛ. I. 23. 11.
2. E. G. ०विशेष-, Sh. ०विशेषो.
3. F. ०र्थौश्चा०, G. ०र्थोश्चा०. Gdh. आदिवचनादुत्सर्गमपि कुर्यात्.
4. Sh. परिदत्ते.
5. Sh. E. G. ०मि. G. omits प्रजापतये त्वा परिददामि.
6. Cf. MānGṛ. I. 23. 15.
7. Cf. MānGṛ. I. 23. 16.
8. Sh. E. ०तः.
9. Cf. MānGṛ. I. 23. 21. Cf. VārŚr. Par. Rahasya pp. 270, 271: अथ प्रवर्ग्यादेशनम् । मंत्रब्राह्मणसमाप्तौ यथोक्तमपराह्णे कुमारं पर्युप्तिनं स्नातं मेखलावासोदण्डप्रदानादीनि यथोक्तमहतेनास्य वाससा शिरः परिणह्येत् । ...तस्य नित्यानि व्रतानि प्रवर्ग्येऽधिकानि । तिष्ठेदहनि रात्रावासीत वाग्यतः । सन्ध्याकाले वाक्संयमनवाशी दिवाशी । नित्यं पर्वसु वा त्रिः स्नायात् ।...एवं वत्सरमयुग्मानि वा वर्षाणि द्वादशवराण्यहतेनास्य वाससा शिरः परिणह्येत् ।...गुरवे निवेद्य वरं दद्याद्यथाऽस्य रहस्यं प्रब्रूयात् । उत्तमो मार्जनो रहस्यं कर्म भवति रहस्यं भवति.
10. Sh. omits रहस्ये.
11. Sh. E. G. ०सराद्वरः, Gdh. संवत्सरादर्वाक्.
12. F. गृह्ये०, G. ०वाराहसूत्रे०, Sh. ०अष्टमः खण्डः, E. ०नवमं खण्डम्.

## [ अथोपाकरणम् ]

वर्षासु श्रवणेनाध्यायानुपाकरोति[1]। हस्तेन वा। प्रौष्ठपदीमित्येके[2]॥[3]१॥ अथ जुहोति—

अप्वा[4] नामासि तस्यास्ते जोष्ट्रीं गमेयम्।

अहमिद्धि पितुः परि मेधा अमृतस्य जग्रभ[5]। अहं सूर्य इवाजनि॥ स्वाहा॥

अप्वो नामासि तस्य ते जोष्ट्रं गमेयम्।

अहमिद्धि पितुः परि मेधा अमृतस्य जग्रभ। अहं सूर्य इवाजनि॥ स्वाहा॥[6]

इति[7]॥[8]२॥ युक्तिर्नामासि। योगो नामासि। मतिर्नामासि[9]। सुमतिर्नामासि। सरस्वती नामासि। सरस्वान्नामासि[10]॥ तस्यास्ते०, तस्य ते० इत्यनुषजेत्[11]॥[12]३॥ युजे स्वाहा। प्रयुजे स्वाहा। संयुजे स्वाहा[13]। उद्युजे स्वाहा। उद्युज्यमानाय[14] स्वाहेति जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृतोऽन्तेवासिनां योगमिच्छन्नथ जपति—ऋतं वदिष्यामि सत्यं वदिष्यामि ब्रह्म वदिष्यामि[15] तन्मामवतु तद्वक्तारमवत्ववतु माम्[16]अवतु वक्तारम्॥ वाङ् मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरायुर्मयि धेहि॥ वेदस्य वाणी स्थ॥ उपतिष्ठन्तु छन्दांस्युपाकुर्महे ऽध्यायान्॥[17]४॥ ओं[18] भूर्भुवः स्वरिति दर्भपाणिस्त्रिः सावित्रीमधीत्यादितश्च[19] त्रीननुवाकांस्तथाङ्गानामेकैकम्। को वो युनक्तीति च॥[20]५॥

1. Sh. श्रवणेन स्वाध्या०.
2. F. प्रोष्ट०.
3. Cf. MānGṛ. I. 4. 1.
4. Sh. अघा—( misread for अप्वा ).
5. Thus Sh. Other mss. जग्रभत् (F. has जग्रभत् in the next verse also). Cf. MānGṛ. I. 4. 2, KāṭhGṛ. IX. 2.
6. Sh. E. G. Gdh. omit अप्वो नामासि ...स्वाहा.
7. Sh. omits इति.
8. Cf. MānGṛ. (ib.).
9. Gdh. omits this and the three subsequent formulas.
10. Sh. omits सुमतिः...सरस्वान्नामासि.
11. Sh. तस्यास्ते जोष्ट्रीं गमेयं तस्य ते जोष्ट्रं गमेयं। इति सर्वत्रानुषजति.
12. Cf. MānGṛ. (ib.).
13. Gdh. omits प्रयुजे स्वाहा, संयुजे स्वाहा.
14. E. G. युज्यमा०.
15. Gdh. and MānGṛ. I. 4. 4 omit ब्रह्म वदिष्यामि.
16. F. omits तद्वक्तारमवत्ववतु माम्.
17. Cf. MānGṛ. I. 4. 3-5.
18. Sh. E. G. omit ओं.
19. Sh. omits च.
20. Cf. MānGṛ. I. 4. 4, 5.

## [अथानध्यायाः]

तस्यानध्यायाः। समूहन्वांतः, वलीकक्षारप्रभृति वर्षे[2], न विद्योतमाने न स्नयतीति[3] श्रुतिः, आकालिकं देवतुमूलं[4] विद्युद्धन्वोल्काऽत्यक्षराः शब्दाः, आचारेणान्ये[5] ॥[6]६॥

## [अथोत्सर्जनम्]

अर्धपञ्चमान्मासानधीत्य पञ्चार्धषष्ठान्वा दक्षिणायनं वाऽधीत्याथोत्सृजन्त्येतेन धर्मेण—ऋतमवादिषं सत्यमवादिषं ब्रह्मावादिषं तन्मामावीत्तद्वक्तारमावीदावीन्मामावीद्वक्तारम् ॥ वाङ्मे मनसि प्रतिष्ठिता मनो मे वाचि प्रतिष्ठितमाविरायुर्मयि धेहि ॥ वेदस्य वाणी स्थ ॥ प्रतिश्वसन्तु छन्दांस्युत्सृजामहे[9] ऽध्यायान् ॥[10]७॥ ओं[11] भूर्भुवः स्वरित्यन्तमधीत्य को वो विमुञ्चतीति च ॥[12]८॥

## [अथानध्यायाः]

पक्षिणीं रात्रीं[13] नाधीयीत[14]। उभयतःपक्षां वा ॥[15]९॥ नात ऊर्ध्वमभ्रेषु ॥[15]१०॥ आकालिक[16]विद्युत्स्तनयित्नुवर्षं वर्षे[17] च ॥[18]११॥

1. Sh. E. G. Gdh. ०हनवा०.
2. Sh. वल्मीकक्षारप्रभृतिवर्षान्, E. G. ०वर्षन्.
3. For न विद्योत०...स्तनयतीति Sh. reads विद्योतमानस्तनयित्नुरिति, while E. G. have विद्योतमानस्तनयितोविति. For स्तनयतीति F. has स्तनयत इति.
4. Sh. E. ०मु०. Cf. MānGṛ. I. 4. 6 and its commentary.
5. Sh. E. G. omit अन्ये.
6. Identical with MānGṛ. I. 4. 6.
7. Thus Sh. Other mss. ०ना०.
8. Sh. adds तद्.
9. E. G. ०स्युत्सृजे.
10. Cf. MānGṛ. I. 4. 7-9.
11. Sh. E. G. omit ओं.
12. Cf. MānGṛ. I. 4. 8, 9.
13. Sh. ०त्रिं.
14. F. ०धीत.
15. Cf. MānGṛ. I. 4. 10.
16. Thus Sh. Other mss. आकालिकी.
17. Sh. E. G. omit वर्षे.
18. Cf. MānGṛ. I. 4. 11.

# [ अथोपनिषदर्हाः ]

अथोपनिषदर्हाः । ब्रह्मचारी सुचरिती[1] मेधावी कर्मकृद्धनदः प्रियः, विद्यया वा विद्यामन्विच्छन् ॥[2] १२ ॥ तानि तीर्थानि [3]ब्रह्मणः ॥[4][5] १३ ॥

इति वाराहगृह्ये ऽष्टमं खण्डम्[6] ॥

—————

# [ अथ गोदानम् ]

षोडशवर्षस्य गोदानम्[7] । अग्नि[8] वाऽध्येष्यमाणस्य[9] । अग्निगोदानो[9]

1. Sh. ०चरित–.
2. Cf. MānGr̥. I. 7. 1.
3. F. ब्रा०.
4. Sh. E. G. add : वेदस्य ब्रह्मचारित्वादयः ग्रहणे तीर्थान्युपायाः(E. G. add further ब्राह्मणः ). In F. this passage has been noted on the margin, though slightly changed : ब्रह्मणा वेदस्य ब्रह्मचारित्वादयः ग्रहणे तीर्थान्युपायाः. The VārŚr. Par. Antarkyakalpa ms. p. 364 reads this and the former sūtra thus : अथोपनिषदर्हाः । ब्रह्मचारी सुचरिति मेधावा कर्मकृद्धनदः प्रियः विद्यया वा विद्यामन्विच्छ१स्तानि तीर्थानि ब्राह्मणः. Cf. KāṭhGr̥. X. 2.
5. Identical with MānGr̥. I. 7. 2.
6. F. गृह्ये०, Sh. ०सप्तमः खण्डः, G. ०वाराहसूत्रे सप्तमं खण्डं समाप्तम्.
7. Gdh. explains the word thus : दक्षिणोत्तरपश्चिमजटा गोदानशब्दवाच्यः । गवि भूमौ दीयत इति गोदानम् । तच्च केशान्तास्यं कर्म. Ādityadarśana commenting on KāṭhGr̥. XLIV. 1 proceeds a step further : गवि भूमौ दीयत इति गोदानं स्वपतः शिरोभागम्.
8. The interpretation of this passage as given in MānGr̥. commentary I. 21. 13 is as follows : अग्निं युञ्जानकस्थानं यदाध्येष्यमाणस्यागच्छेत् तदा वा. Cf. KāṭhGr̥. XLIV. 1: अग्नौ वा समाप्ते and on it the gloss of Ādityadarśana : बह्विष्टके हिरण्यगर्भान्ते पठित इत्यर्थः. On बह्विष्टक Prof. Caland gives the note : बह्विष्टक is apparently a designation of the Agnicayana part of the Yajurveda (Kāṭh. XIX. 1 sqq ). According to Ād. this part ends with Kāṭh. XXII. 14 : 70. 19.
9. Sh. ०गोदानिको. Cf. MānGr̥. ib. अग्निगोदानिको (though the com. and even some of the Gr̥. mss. read अग्निगोदानिको ).

मैत्रायणिः[1] ॥[2] १ ॥ जटाकरणेनोक्तो[3] मन्त्रविधिः ॥[2] २ ॥ उपस्थे उपकक्ष-योश्चाधिको मन्त्रप्रयोगः ।

यत्क्षुरेण पर्चयता सुपेशसा वप्तर्वपसि केशश्मश्रून् ।

शुन्ध शिरो मुखं मास्यायुः प्रमोषीः ॥

इति ॥ ३ ॥ भूमौ केशान्निखनेत् ॥ ४ ॥ अन्ते गां दद्यात् ॥ ५ ॥

## [ अथ समावर्तनम् ]

वेदे गुरुणाऽनुज्ञातः स्नायात् ॥ ६ ॥ छन्दस्यर्थान्बुद्ध्वा स्नास्यन्गां कारयेत् ॥[9] ७ ॥ आचार्यमर्हयेत् ॥[10] ८ ॥ आपो हि ष्ठेति[11] तिसृभिः, हिरण्य-वर्णाः शुचय[12] इति चतसृभिः स्नात्वाऽहते वाससी परिदधीत[13]—वस्त्रं सि वसु-

1. Sh. reads मैत्रायणीय-.
Gdh. अग्निः प्रधानदेवता गोदाने अस्य ब्रह्मचारिणः सः अग्निगोदानः मैत्रायणिरा-चार्यो मन्यते यस्मात् तस्मादाग्नेयश्चरुः. Cf. also MānGṛ. com. I. 21. 13: अग्निप्रवर्तनात्प्रागूर्ध्वमेव वेत्यनियमः । अत्र प्रमाणमाह—अग्निगोदानिको मैत्रायणिरिति श्रुतिः । गोदाने भावो गोदानिकः गोदान-प्रयोजनो वा.
2. Cf. MānGṛ. ib.
3. Sh. ॰नोक्त-.
4. The VaikhDh. III. 15 assigns to the son born of अम्बष्ठ (born of विप्र and वैश्या III. 12) father and क्षत्रिया mother the duty of shaving the body below the nave: [अम्बष्ठात्] क्षत्रियायामधोनापितः—नाभेरधो रोमवप्ता. These अधोनापितs were different from those who shaved the body above the nave, and held a low position in society. They still exist in the South.
5. Sh. gives only the pratika: यत्क्षुरेण मर्चयता.
6. G. Gdh. केशान्.
7. G. ॰युं.
8. MānGṛ. com. I. 2. 8: प्रवरां गां कार-येत् । मधुपर्काद् वा भूतां गां 'कुरुत' इति [I. 9. 20] प्रेष्यन् 'कारयति' इत्युच्यते. Cf. KāṭhGṛ. III. 1 and thereon the Bhāshya of Devapāla, the Paddhati of Brāhmaṇabala and the Vivaraṇa of Ādityadarśana.
9. Identical with MānGṛ. I. 2. 8.
10. Cf. MānGṛ. I. 2. 9.
11. MS. II. 7. 5.
12. MS. II. 13. 1.
13. Thus Gdh. Sh. ॰ददाति, other mss. ॰ददीत.
14. Sh. and MānGṛ. I. 2. 12 वस्त्र्य॰, but the Baroda edition of the MānGṛ. agrees with the text given above.

मन्तं मां कुरु सौवर्चसाय वां[1] तेजसे ब्रह्मवर्चसाय[2] परिदधानीति[4] ॥[5] ९ ॥ विश्वजनस्य छायासीति[6] छत्रं धारयते ॥[7] १० ॥ मालामाबध्नीते —

यामश्विनौ धारयेतां बृहतीं पुष्करस्रजम् ।
ताꣳ विश्वैर्देवैरनुमतां मालामारोपयामि ॥

इति[9] ॥[10] ११ ॥ तेजो ऽसीति[10] हिरण्यं बिभृयात् ॥[11] १२ ॥ प्रतिष्ठे स्थो देवते[12] मा मा संताप्तमित्युपानहौ ॥[13] १३ ॥ विष्टम्भो ऽसीति[14] धारयेद्वैणवीꣳ यष्टिम्[15] ॥[16] १४ ॥ सोदकं[17] च कमण्डलुम् ॥ १५ ॥

## [ अथ स्नातकधर्माः ]

नित्यव्रतान्याहुराचार्याः ॥ १६ ॥ द्विवस्त्रो ऽत ऊर्ध्वम् । शोभनꣳ वासो भर्तव्यमिति श्रुतिः ॥[18] १७ ॥ आमन्त्र्य गुरून्गुर्वधीनाꣳश्चै[19] स्वान्गृहान्व्रजेत् ॥[20] १८ ॥ प्रतिषिद्धमपरया द्वारा निस्सरणं, मलवद्वाससा सह संभाषा रजस्वद्वाससा सह शय्या, गोर्गुरोर्दुरुक्तवचनम्[21], अस्थाने शयनꣳ स्थानꣳ स्मयनꣳ यानं गानꣳ स्मरणमिति । तानि वर्जयेत् ॥[22] १९ ॥ याजनꣳ वृत्तिः ।

1. Sh. Gdh. Vas. MānGṛ. I. 2. 12. मा.
2. Sh. MānGṛ. ib. मा.
3. E. G. Vas. add वा.
4. Sh. E. Vas. MānGṛ. ib. ०दधामि or ०ददामि for०दधानि, F. G. Gdh.०ददानि.
5. Cf. MānGṛ. I. 2. 11, 12.
6. MS. I. 2. 11.
7. Cf. MānGṛ. I. 2. 15.
8. Sh. विश्वेदेवै०.
9. F. ०रोपयामत[ह] इति, but Gdh. Vas. ०रोपयाम इति.
10. MS. I. 1. 11.
Sh. omits from the text तेजो ऽसीति and gives it in the footnote.
11. Cf. MānGṛ. I. 2. 14.
12. Sh. MānGṛ. I. 2. 16 add: द्यावापृथिवी.
13. Cf. MānGṛ. ib., KāṭhGṛ. III. 8.
14. TS. III. 5. 2. 2, KS. XVII. 7.
15. Gdh. Vas. वैष्णवं दण्डं.
16. Cf. MānGṛ. I. 2. 15.
17. Before सोदकं Gdh. and Vas. insert ओं प्रजापते इति अक्ष्णोरंजने विनियोगः (cf. MānGṛ. I. 2. 13), and further on supply the verse missing in the Gṛhya: इमा आपः प्रभरामि[...]अमृतेन सहायुषा [ cf. VārGṛ. V. 27 ] इत्यनेन सोदककमण्डलुधारणम् । ततः कुलाचारः.
18. Cf. MānGṛ. I. 2. 17.
19. Sh. गुरुवधूश्च.
20. Cf. MānGṛ. I. 2. 18.
21. A. गुरोर्दु०, B. Gdh. गोगुरोर्दु०, emended by Sh. to गोगुर्वोर्दु०.
22. Cf. MānGṛ. I. 2. 19.

उञ्छं[1] शिलमयाचितप्रतिग्रहः साधुभ्यो वा याचितम् । असं[2]सिध्यमानायां वा वैश्यवृत्तिः ॥ २० ॥ स्वाध्यायविरोधिनो ऽर्थानुत्सृजेत्[3] ॥ २१ ॥

इति वाराहगृह्ये नवमं खण्डम्[4] ॥

---

# [ अथ कन्यावरणम् ]

विनीतक्रोधः सहर्षः[5] सहर्षीं[6] भार्यां[7] विन्देतानन्यपूर्वां[7] यवीयसीम् ॥१॥ असमानप्रवरैर्विवाहः । ऊर्ध्वं[7] सप्तमात्पितृबन्धुभ्यः पञ्चमान्मातृबन्धुभ्यो बीजिनश्च ॥ २ ॥ कृत्तिकास्वातिपूर्वैरिति वरयेत्[7] ॥[9] ३ ॥ मृगशिरःश्रविष्ठोत्तराणीत्युपयमेत्[8] ॥[9] ४ ॥ पञ्च विवाहकारकाणि भवन्ति—वित्तं रूपं विद्या प्रज्ञा बान्धवमिति ॥[10] ५ ॥ एकालाभे वित्तं विसृजेत् । द्वितीयालाभे

1. Sh. उञ्छ-.
According to Kullūka (M. Smṛti X. 112) शिल=अनेकधान्योच्चयन 'gleaning more than one ear of corn at a time' opposed to उञ्छ=एकैकधान्यादिगुडकोच्चयन. Gdh.'s explanation is, however, different: उञ्छवृत्त्या यायावरवृत्त्या वा जीवीत्.

2. For असं Sh. reads अनायासेन.

3. Sh. ०र्थान् विसृ०.

4. F. गृह्ये०, Sh. ०नवमः खण्डः, E. ०दशमं खण्डम्, G. ०अष्टमखण्डम् ॥८॥ समाप्तिमगमत् ॥ शुभं भूयात् ॥

5. Thus Sh. Gdh., F. ०क्रोधहर्षः.

6. Sh. has महिषीं. Gdh. महिषीं=हर्षयुक्तां points to सहर्षीं as the original reading.

7. Identical with MānGṛ. I. 7. 4.

8. Gdh. ०यमे. Thus also MānGṛ. I. 7. 5 and KāṭhGṛ. XIV. 10. Gdh. takes it to be a Vedic irregularity for उपयमेत्, but Devapāla on KāṭhGṛ. ib. explains it as the locative singular of उपयम — उपयमः स्वीकारः । तत्रैतान्यनुकूलानीत्यर्थः.

9. Cf. MānGṛ. ib.

10. Cf. MānGṛ. I. 7. 6.

रूपम्। तृतीयालाभे विद्याम्। प्रज्ञायां तु बान्धवे च[1] विवदन्ते ॥[2] ६ ॥
अनृक्षरा ऋजवः सन्तु पन्था येभिः सखायो यन्तु[3] नो वरेयम्।
समर्यमा सं भगो नो ऽनुनीयात्सं जास्पत्यं सुयममस्तु देवाः ॥[4]
इति वरकान्व्रजतो ऽनुमन्त्रयते[5] ॥ ७ ॥ बन्धुमतीं[6] कन्यामस्पृष्टमैथुनामुपयच्छेतानग्निकां श्रेष्ठाम् ॥[7] ८ ॥ विज्ञानमस्यै कुर्यात्। चतुरो लोष्टानाहरेत्—सीतालोष्टं वेदिलोष्टं गोमयलोष्टं श्मशानलोष्टं च ॥[9] ९ ॥

1. For बान्धवे च Sh. reads बान्धवाः.
2. Cf. MānGr̥. I. 7. 7.
3. Sh. यन्ति.
4. Gdh. takes each of the hemistichs as one verse.
5. The ācārya (?) chants the mantra while the groom's party proceeds towards the bride's house to finally settle the match.
6. Gdh. बन्धुमतीं भ्रातृमतीमित्यर्थः.
7. Gdh. अनग्निकां पृष्टां (?) अवाप्त (v. l. अप्राप्त)स्त्रीभावात्। यद्वा नग्नां विवस्त्रीरूपां अज्ञातलज्जां लावण्ययुक्तां विवहेदित्यर्थः. Cf. MānGr̥. I. 7. 8 नग्निकां and the com.: नग्निकाम्=अप्राप्तस्त्रीभावाम्।... अथवा नग्निकां श्रेष्ठाम्। विवस्त्रा सती श्रेष्ठा या भवेत्तामुपयच्छेत। यस्मात्कुरूपाऽपि वस्त्राद्यलंकारकृता मनोहारिणी भवति तस्माद्विवस्त्रा सती न सर्वा शोभते.
But VaikhGr̥. VI. 12: अष्टवर्षादा दशमान्नग्निका.
It would be interesting to note in this connection the view of Sir Thomas More as recorded in his Utopia that before marriage a staid and honest matron "showeth the woman, be she maid or widow, naked to the wooer...At this custom we laughed and disallowed it as foolish. But they, on their part, do greatly wonder at the folly of all other nations which, in buying a colt...be so chary and circumspect that though he be almost all bare, yet they will not buy him unless the saddle and all the harness be taken off, lest under these coverings he hid some gall or sore. And yet, in choosing a wife,...... they be so reckless that all the residue of the woman's body being covered with clothes, they estimate her scarcely by one handsbreadth (for they can see no more but her face) and so join her to them." (Quoted by H. Ellis, Studies in the Psychology of Sex Vol. VI. p. 102).
8. Cf. MānGr̥. I. 7. 8.
9. Cf. MānGr̥. I. 7. 9.
Cf. BhārGr̥. I. 11: श्लोकं तु लाक्षणा उदाहरन्ति—
यस्यां मनो ऽनुरमते चक्षुश्च प्रतिपद्यते।
तां विद्यात्पुण्यलक्ष्मीकां किं ज्ञानेन करिष्यति ॥
Dr. Salomons' view that this "must be a later addition from a light-hearted copyist" is untenable, for

तेषामेकं गृह्णीष्वेति ब्रूयात् । श्मशानलोष्टं चेद् गृह्णीयान्नोपयच्छेत्।।[3] १० ।। असंस्पृष्टां धर्मेणोपयच्छेत् ब्राह्मेण शौल्केन वा ।।[7] ११ ।। शतमितिरथं दद्याद् गोमिथुनं वा ।।[8] १२ ।। उभयांस्तेजनीष्वासजेज्जन्यान्कौमारिकांश्च । पूर्वे जन्याः स्युरपरे कौमारिकाः ।। १३ ।। चतुरो गोमयपिण्डान्कृत्वा द्वावन्येभ्यस्तथान्येभ्य इति प्रयच्छेत् ।।[11] १४ ।। धनं न इति ब्रूयुः । पुत्रपशवो न इति[12] जन्याः ।।[13] १५ ।। ददानि[14] । प्रतिगृह्णानीति[15] त्रिर्ब्रह्मदेयाम्[16]

similar passages are quoted in other ancient texts as well, e. g. ĀpGṛ. I. 3. 20 and Vātsyāyana's Kāmasūtra ch. XVI : यस्यां मनश्चक्षुषोर्निबन्धस्तस्यामृद्धिर्नेतरदा ( Vātsyāy. ०रामा० for ०रदा० of Āp.) द्रियेतेत्येके.

1. Sh. Gdh. एते०.
2. Sh. E. Gdh. ०त्.
3. Cf. MānGṛ. I. 7. 10.
4. Sh. ०सृ०. Cf. MānGṛ. I. 7. 11. संजुष्टां.
5. Sh. E. ०त्.
6. Gdh. ब्राह्मो धर्म उदकपूर्वकदानम्.
7. Cf. MānGṛ. ib.
8. But F. शतमति०, and Gdh. शुल्कनियममाह—शतमित्यादि । सपादं तु अधाधिकं शतं गवां दद्यात्. Prof. Caland suggests शमरथं 'a slow-going chariot' (Sāyaṇa on TS. Calcutta ed. p. 1008). A more probable reading is शतमधिरथं. Cf. Viśvarūpācārya on Yājñavalkya Smṛti I. 80, where he cites an ancient Brāhmaṇa passage: तस्माद् दुहितृमते ऽधिरथं शतं देयमितीह क्रयो विज्ञायते. The word अधिरथं goes back to Ṛgveda, and means a cart-load. Sāyaṇa would have translated शतमधिरथं by 'a hundred bullocks and carts'. Our variant शतमतिरथं stands very close to शतमधिरथं.
9. Identical with MānGṛ. I. 7. 12.
10. Sh. Gdh. उभये. Sh. reads it along with गोमिथुन वा, i. e. 'both the parties are to present a pair of cows'. Here Sh. forgets that शुल्क is to be given by one party alone. Cf. Gdh. कन्यायै वरो ददाति.
11. Gdh. तत आचार्यश्चतुरो गोमयगोलकान्कृत्वा द्वौ कन्यादातुः प्रयच्छेद् द्वौ कन्याप्रतिगृहीतृहस्ते च.
12. Sh. puts a stop after इति and reads जन्यां (for our जन्याः) along with ददामि of the next sūtra.
13. Gdh. ओं धनं न इति, [ओं] पुत्रपशव[ ो न इति च ] गोमयगोलकदानग्रहणे विनियोगः. Of these the first mantra is to be chanted by the groom's party and the second by the bride's party.
14. Sh. E. Gdh. ०मि. After ददामि Sh. adds इति.
15. Sh. E. Gdh. ०मीति. Sh. E. add प्रतिगृह्य.
16. Sh. E. ०देयानि.

॥[1]१६॥ कृतेनांऽसेन[2] विसंकसेयुः[3] ॥१७॥ त्रिरानन्दं मागधो ह्वयेत् ॥१८॥

इति वाराहगृह्ये दशमं खण्डम्[4] ॥

---

# [ अथ मधुपर्कः ]

षडर्घ्यार्हा भवन्ति—ऋत्विगाचार्यो विवाह्यो[5] राजा स्नातकः प्रियश्चेति ॥[6] १ ॥ अप्राकरणिकान्[7] परिसंवत्सरादर्हयन्ति । अन्यत्र याज्यात्कर्मणो विवाहाच्च ॥[8] २ ॥ न जीवपितृको[9]ऽर्घ्यं प्रतिगृह्णीयात् ॥[10] ३ ॥ अथैनमर्ह-[11]यन्ति ॥[12] ४ ॥ कांस्ये चमसे वा दधनि[13] मध्वासिच्य वर्षीयसाऽपिधार्य[14] विराजो दोहो ऽसि विराजो दोहो ऽसि[15] विराजो दोहमशीय मयि दोहः पद्यायै विराज[16] इति मधुपर्कमाह्रियमाणं[17][18] प्रतीक्षते[19] ॥[20] ५ ॥ सावित्रेण

1. Gdh. ददामीति कन्यादाता वदेत् । कन्याप्रतिगृहीता प्रतिगृह्णामीत्युक्त्वा प्रतिगृह्णीयुः । इत्येवं त्रिः । चतुर्थं तूष्णीम् । यत ब्राह्मविवाहे नान्यत्र.
2. For अंसेन Sh. has असं न.
3. Gdh. अधःकृतेन स्कन्धेनोपलक्षिताः प्रत्याव्रजेयुर्वरकाः.
4. F. गृह्ये०, Sh. ०दशमः खण्डः, E. ०एकादशमं खण्डम्.
5. Gdh. वै०.
6. Identical with MānGṛ. I. 9. 1.
7. Sh. ०ना. Gdh. प्राकरणिका ऋत्विगादयः पञ्च.
8. Cf. MānGṛ. I. 9. 2, 3.
9. Sh. E. ०वत्पि०.
10. Cf. MānGṛ. I. 9. 4: न जीवत्पितृको ऽर्घ्यं प्रतिगृह्णीयादिति श्रुतिः.
11. E. तथै०.
12. Sh. omits the sūtra. Identical with MānGṛ. I. 9. 5. Gdh. कन्यापिता वरशाखानुसारेण मधुपर्केणैनमर्हयेत्.
13. Sh. सदभ्रि.
14. Sh. adds: आचमनीयप्रथमैः प्रतिपद्यन्ते.
15. Sh. omits the second विराजो दोहोऽसि.
16. Sh. adds कल्पताम्, while B. omits even विराजः.
17. Sh. एकैकमा०.
18. F. ०ह्री०.
19. Gdh. कन्यापित्राह्रियमाणं मधुपर्कं वरोऽवेक्ष्यति.
20. Cf. MānGṛ. I. 9, 6, 7.

विष्टरौ[1] प्रतिगृह्य राष्ट्रभृदसीत्यासन्द्यामुदगग्रमास्तृणाति[2] ॥[3]६॥

अहं वर्ष्म सदृशानामुद्यतानामिव[4] सूर्यः ।
इदमहं तमधरं करोमि[5] यो मा कश्चाभिदासति[6] ॥

इत्येकस्मिन्नुपविशति[7] ॥[8]७॥ [9]मा त्वद्योषंमित्यन्यतरमधस्तात्पादयोरुपकर्षति[12] ॥[13]८॥ विष्टर आसीनायैकैकं[14] त्रिः प्राह ॥[15]९॥ नैव भो इत्याह । न मा रिषामेति[16] ॥[17]१०॥ आचमनीयाः प्रथमाः प्रतिपद्यन्ते ॥[18]११॥ अमृतोपस्तरणमसीत्याचामति ॥[19] १२॥ पद्येन पादौ प्रक्षालयति ॥[20]१३॥ स्पृशत्यर्घम् ॥[21]१४॥ ततः प्रणयति ॥[22]१५॥ सावित्रेणोभयतो-

1. Sh. विष्टरं.
2. Sh. omits राष्ट्रभृदसि...॰मास्तृणाति. Gdh. राष्ट्रभृदसि इत्यस्य विष्टरो देवता । आस्तरणे विनियोगः.
3. Cf. MānGṛ. I. 9. 7, 8.
4. Sh. ॰मुद्यतामिव.
5. A. इदं तमभितिष्ठामि.
6. Sh. कस्यचिदासति, Gdh. कस्याश्चाभि॰.
7. A. यो मा कश्चा अभिदासति इति जपति. Gdh. अहं वर्ष्मेत्यस्य...उपविशने विनियोगः.
8. Cf. MānGṛ. I. 9. 8.
9. Before this verse Sh. inserts : राष्ट्रभृदसीत्याचार्य आसन्दीमनुमंत्रयते.
10. Thus corrected. The mss. त्वा जो(A. दो)षम्.
11. Sh. पादयोर्विष्टरमुप॰.
12. Gdh. तत्र पादौ स्थापयेत्.
13. Cf. MānGṛ. I. 9. 10.
14. Sh. विष्टरमासीनायैकं.
15. Identical with MānGṛ. I. 9. 11.
16. For न मा रिषामेति Sh. reads: न । म आर्षेयाय इति श्रुतिः, and puts down in the footnote: न परिषामेत्याचमनीया प्रथमाः प्रतिपद्यन्ते अमृतोपस्तरणमसीत्याचामति.
17. Cf. MānGṛ. I. 9. 12. Gdh. नैव भो इति शब्दे पाणिना स्पृष्टं स्पृशति । पश्चाद् गृह्णीयादित्यर्थः (cf. MānGṛ. com.: विष्टरासीनायेति वचनान्नैव भो इत्याह । नम आर्षेयाय इति च । नैवभोशब्देन च पाणिना संस्पृशति । पश्चाद् गृह्णात्येव) न मारिषा इमेर्षेयाय (?) सुसुश्रुषे (?) ददाति । छंदांसि तया प्रीणाति इति श्रुतिः. Cf. also KāṭhGṛ. XXIV. 9: नैव भो इत्याह न मार्षेति and Devapāla's com. thereon: अभ्यर्हणीयाभिमुख्यापादनार्थं यद् भो इति पूजासंबोधनं प्राप्तं नामसंबोधनं च मार्ष यज्ञदत्त इत्यादि तन्निषेधयति.
18. Cf. MānGṛ. I. 9. 6.
19. Cf. MānGṛ. I. 9. 15. Sh. omits sūtras 11 and 12.
20. Cf. MānGṛ. I. 9. 13.
21. Cf. MānGṛ. I. 9. 12.
22. Sh. puts sūtras 13-15 (पाद्येन पादौ... स्पृशत्यर्घ्यं...प्रणयति) in the footnote, and substitutes for them the Mā-

विष्टरं मधुपर्कं प्रतिगृह्य—अदित्यास्त्वा पृष्ठे सादयामीति[1] भूमौ[2] प्रतिष्ठाप्यावसाय्यं[3] सुपर्णस्य त्वा गरुत्मतश्चक्षुषाऽवेक्ष इत्यवेक्ष्य नमो रुद्राय पात्रसदे[4] इति प्रादेशेन प्रतिदिशं व्युद्दिश्याङ्गुष्ठेनोपमध्यमया च मधु वाता ऋतायते[5] इति तिसृभिः संसृजति ।।[6]१६ ।। सत्यं[7] यशः श्रीर्मयि श्रीः[8] श्रयतामिति[9] त्रिः प्राश्नाति भूयिष्ठम् ।।[10]१७ ।। सुहृदे ऽवशिष्टं प्रयच्छति ।।[11]१८ ।। अमृतापिधानमसीत्याचामति ।।[12]१९ ।। असिविष्टरपाणिर्गां[13] प्राह ।।[14]२० ।।

हतो मे पाप्मा पाप्मानं मे हत ।।[15]

यां त्वा देवा वसवो ऽन्वजीविषुरादित्यानां स्वसारं रुद्रमातरम् ।
देवीं[16] गामदितिं जनानामारभन्तामर्हतामर्हणाय ।।[17]

ओं कुरुतेति संप्रेष्यति ।।[18]२१ ।। चतुरवरान्ब्राह्मणान्नानागोत्रानित्येकैकं पश्वङ्गं पायसं वा भोजयेत् ।।[19]२२ ।। यद्युत्सृजेत्—

माता रुद्राणां दुहिता वसूनां स्वसादित्यानाममृतस्य नाभिः ।
प्र नु वोचं[20] चिकितुषे जनाय मा गामनागामदितिं वधिष्ट ।।
ओमुत्सृजत[21] तृणान्यत्तूदकं पिबतु ।।[22]

nava sūtras: स्पृशत्यर्घ्यं पाद्येन पादौ प्रक्षाल्य (I. 9. 12, 13).

1. MS. I. 1. 2.
2. Sh. omits भूमौ.
3. Sh. E. ॰वसाय. Gdh. प्रतिष्ठाप्योद्घाटयेत्.
4. E. पात्रसादने.
5. MS. II. 7. 16.
6. Cf. MānGr̥. I. 9. 13, 14.
7. Before this verse Sh. inserts: अमृतोपस्तरणमसि इत्युपस्तरति.
8. F. omits श्रीः.
9. Sh. adds मधुपर्कं.
10. Gdh. चतुर्थं तूष्णीं. Cf. MānGr̥. I. 9. 16.
11. Identical with MānGr̥. I. 9. 18. Gdh. अवशिष्टं सुहृद्भ्यो ददाति । नावशेषणावश्यकं भूयिष्ठमिति वचनात्.
12. Identical with MānGr̥. I. 9. 17. Gdh. reverses the order of sūtras 18, 19.
13. Sh. असिपाणि॰.
14. Gdh. खड्गदर्भमुष्टिहस्तः कन्यापिता गो इति ब्रूयात् । मुञ्च गामिति वरो ब्रूयात्. Cf. MānGr̥. I. 9. 19.
15. Gdh. हतो मे...मे हत इति गां प्राह । गामुद्दिश्येति वामकरेण स्पृशेत्.
16. E. Gdh. देवीं.
17. Gdh. वर आलभ्यमानायां गवि जपति—ओं यां त्वा...
18. Cf. MānGr̥. I. 9. 20.
19. Cf. MānGr̥. I. 9. 21, 22.
20. E. प्र ण वोचि.
21. Sh. ॐ भूर्भुवस्स्वरों—इत्युत्सृजतु. Gdh. ओमुत्सृजत । ओं भूः भुवः स्व उत्सृजेत्
22. Here Sh. and MānGr̥. I. 9. 23

इत्युक्ते पशुमालभन्ते[1] ॥[2] २३ ॥ शं नो मित्र इति पाणी[3] प्रक्षाल्य यथार्थम् ॥[4] २४ ॥

इति वाराहगृह्ये एकादशं खण्डम्[5] ॥

---

# [ अथालंकरणम् ]

अथालंकरणम्[6]—अलंकरणमसि सर्वस्मा[7] अलं[8] भूयासम् ॥[9] १ ॥ प्राणापानौ मे तर्पयामि समानव्यानौ मे तर्पयाम्युदानरूपे मे तर्पयामि चक्षुःश्रोत्रे मे तर्पयामि[10] सुवर्चा[11] अहमक्षिभ्यां भूयास[12] सुवर्चा मुखेन सुश्रुत्कर्णाभ्यामिति गन्धाच्छादने[13] ॥[14] २ ॥

परिधास्ये यशो धास्ये दीर्घायुत्वाय जरदष्टिरस्मि[15] ।

conclude the Madhuparka section.

1. Sh. has at the end of the next chapter: यदि पशुमालभते—शं नो मित्र इति पाणी प्रक्षाल्य यथार्थमालभनमित्येके.
2. Cf. MānGṛ. I. 9. 23.
3. E. °णि.
4. Gdh. नायं कलियुगधर्मः.
5. Sh. and MānGṛ. do not end the chapter with Madhuparka, but go on with अथालंकरणम्.
   E. पंचदश खं°, F. गृह्य°.
6. F. omits अथालंकरणम्. Gdh. ततः कन्यापिता वरस्यालंकरणं वस्त्रयुग्मं च दद्यात्.
7. Sh. Gdh. °स्माद्.
8. Sh. adds मे.
9. Cf. MānGṛ. I. 9. 24. Gdh. अलंकरणमसि...अलं भूयासमिति अलंकरणम्.
10. Sh. omits चक्षुःश्रोत्रे मे तर्पयामि.
11. Sh. °चक्षुर्.
12. Sh. adds भूयासम्.
13. Sh. इति यथालिङ्गमङ्गानि संस्पृशति अथ गन्धाच्छादने वाससी. Gdh. प्राणापानौ मे ...इति नासारन्ध्रद्वयं स्पृशेत् । ओं चक्षुःश्रोत्रे...सुवर्चा मुखेन इति सर्वं मुखं स्पृशेत् । सुश्रुत्...इति कर्णौ स्पृशेत् । अथवा एतौ द्वौ मंत्रौ गन्धोद्वर्तने विनियोगयुक्तौ । तद्यथा—ओं प्राणापानौ मे...इति कराभ्यां कर्णसहितं मुखमवलिम्पेत् ।...
14. Cf. MānGṛ. I. 9. 25, 26.
15. Sh. °दष्टिरस्तु, other mss. °रस्मि.

शतं च जीवं शरदः पुरूचीर्वसूनि चाय्यो विभजाय जीयाम्[1] ॥

इत्यहतं[2] वासं[3] आछाद्याग्निं प्रज्वाल्य व्याहृतिभिर्व्रीहियवान्हुत्वा मङ्गलान्याशासेतं ॥[4] २ ॥

इति वाराहगृह्ये द्वादशं खण्डम्[6] ॥

---

# [अथ प्रवदनकर्म]

अथ प्रवदने कन्यामुपवसितां स्नातां सशिरस्कामहतेर्नाछिन्नदशेन वाससा संवीतां संस्तीर्णस्य पुरस्ताद्विहितानि वादित्राणि विधिवदुपकल्प्य पुरस्तात्स्विष्टकृतो वाचे[9] पथ्यायै[10] पूष्णे पृथिव्या अग्नये सेनायै धेनायै गायत्र्यै त्रिष्टुभे जगत्या अनुष्टुभे पङ्क्तये[11] विराजे राकायै सिनीवाल्यै कुह्वै[12] त्वष्ट्र आशायै संपत्त्यै भूत्यै निर्ऋत्या अनुमत्यै पर्जन्यायाग्नये स्विष्टकृते च जुहुयात् ॥ १ ॥ आज्यशेषेणं[13] पाणी[14] प्रलिप्य कन्याया मुखं[15]

1. Sh. शतं जीवेम.

2. Sh. पुरूची रायस्पोषमभिसंव्ययिष्ये. Gdh. ॰जीयान्.

3. Gdh. इत्यहतं वासयुग्मग्रहणम्.

4. वास आछाद्या॰...मंगलान्याशासयेत् is put in Sh.'s footnote, while his text reads: वासः परिधत्ते यदि पशुमालभते—शन्नो मित्र इति पाणी प्रक्षाल्य यथार्थमालभनमित्येके.

5. Cf. MānGṛ. I. 9. 27.

6. F. गृह्ये॰, Sh. ॰द्वादशः खण्डः.
One of Gdh.'s mss. includes the Alaṅkaraṇa within the Madhuparka, for at the conclusion of both these ceremonies it bears the colophon: इति मधुपर्कः समाप्तः.

7. Sh. सु॰.

8. Sh. ॰महताऽना॰.

9. E. F. add स्वाहा.

10. E. appends स्वाहा or स्वा॰ to every deity up to पर्जन्याय.

11. Sh. E. Gdh. पङ्क्त्यै (E. क्तै).

12. Sh. कुह्वे.

13. Gdh. आज्यशेषेण पाणी प्रलिप्येते न संपातशेषेण.

14. E. ॰णिं.

15. Sh. कन्यामुखं.

संमार्ष्टि[1]—

प्रियां करोमि पतये देवराणाꣳ श्वशुराय[2] च ।
रुच्यै त्वाग्निः सꣳसृजतु रुचिष्या पतये भव ॥
सौभाग्येन त्वा सꣳसृजत्विळा देवी घृतपदीन्द्राण्य[3]ग्नाय्यश्विनी राट् ।
वागिळा द्यौररुन्धती ॥

इति च[4] ॥ २ ॥ सर्वाणि[5] वादित्राण्यभिमन्त्रयते—

या चतुर्धा प्रवदत्यग्नौ या वाते या बृहत्युत ।
पशूनाꣳ यां ब्राह्मणे न्यदधुः शिवा सा प्रवदत्विह ॥

इति ॥ ३ ॥ सर्वाणि[6] वादित्राण्यलंकृत्य[7] कन्या प्रवादयते—

शुभꣳ वद दुन्दुभे सुप्रजास्त्वाय गोमुख ।
प्रक्रीडन्तु कन्याः सुमनस्यमानाः सहेन्द्राण्या सवयसः सनीडाः ॥
प्रजापतिर्यो वसति प्रजासु प्रजास्तन्वते सुमनस्यमानाः ।
स इमाः प्रजा[8] रमयतु प्रजात्यै स्वयं च नो रमताꣳ शं दधानः[9] ॥

इति ॥ ४ ॥ प्रवदन्ति[10] कारालिकानि[11][12] ॥ ५ ॥ कन्यामुदकेनाभिषिञ्चेत् ॥ ६ ॥

इति वाराहगृह्ये त्रयोदशं खण्डम्[13] ॥

---

1. Perhaps the ācārya of the bride. Gdh. आचार्यः सहस्तौ प्रलिपेत्.
2. Sh. श्वशु०.
3. E. Gdh. ०पदीरिंद्रा०, F. घृतवंतीरिंद्रा०.
4. Sh. E. omit च.
5. Sh. अथ सर्वाणि.
6. Sh. adds वा.
7. Gdh. अलंकृत्य मालाक्षतपुष्पैः.
8. Sh. इमां प्रजां.
9. Sh. संदधातनः.
10. E. Gdh. omit प्रवदन्ति.
11. Sh. omits रा.
12. Gdh. प्रवादयन्ति क्रीडनावादनानि.
13. F. गृह्ये०, Sh. ०एकादशः खण्डः, E. ०द्वादशं खण्डम्.

# [ अथ विवाहकर्म ]

खे रथस्य खे ऽनसः खे युगस्य शतक्रतोः ।

अबालामिन्द्रस्त्रिः[2] पूत्त्र्यकृणोत्सूर्यवर्चसः ॥

इत्यथास्या अहतꣳ वासः प्रयच्छति[3] ॥[4] १ ॥ अथैनां दर्भशुल्वेन[5] संनह्यति—

सं त्वा नह्यामि पयसा पृथिव्याः सं त्वा नह्याम्यद्भिरोषधीभिः ।

सं त्वा नह्यामि प्रजया धनेन सह संनद्धा सुनुहि भागधेयम् ॥

इति ॥[6] २ ॥ अथैनाꣳ वाससो ऽन्तं ग्राहयित्वाऽभ्युदानयति[7]—

अघोरचक्षुरपतिघ्न्येधि । एहि शिवा पशुभ्यः सुमनाः सुवर्चाः[8] ।

दीर्घायुपत्नी प्रजया स्वर्विदिन्द्रप्रणयीरुप नो वस्तुमेहि ॥

इति ॥[9] ३ ॥ समूहनोल्लेपनोद्धनना[10]वेक्षणमित्यग्निकाले भूमिसꣳस्कारा-

1. Gdh. deals at length with some very important preliminaries. These I quote here in brief: ततः कन्यापक्षीयाः वरं कन्यासमीपे निन्युः । मंत्रघोषेण ।...ओं समंजन्तु विश्वे देवाः ...[R.V. X. 85. 47] इति मंत्रेण वधूवरौ परस्परं संमुखं गच्छेत् । तिष्ठेत्पूर्वाभिमुखो दाता वरः प्रत्यङ्मुखो भवेत् । मधुपर्कार्चितायैनां तस्मै दद्यात्सदक्षिणाम् ॥... पत्नी हस्त उदकपात्रं गृहीत्वा देवस्य त्वा सवितुः प्रसवे...इति समुच्चार्य...वरहस्ते कन्याहस्तं कांस्यपात्रावच्छिन्नधारया... पुष्पफलाक्षतायुक्तं क्षिपेत् ।......द्यौस्त्वा ददाति पृथिवी त्वा प्रतिगृह्णाति इत्युक्त्वा वरः कन्यां स्पृशेत् ।...गावो भूमिर्महिष्यो वाजिनो ऽपि दद्यात् । स्वर्णमणीनपि । ततो वर इति मंत्रमुच्चारयेत्—क इदं कस्मै अदात । कामः कामायादात् । कामो दाता कामः प्रतिग्रहीता । कामाय त्वा प्रतिगृह्णामि कामैतत्ते इति ।...समाना वा आकूतानि...देवभागं यथा पूर्वे संजानाना उपासते । वामहस्ते गृहीत्वा तां प्रदत्तामेव वरः अघोरचक्षुरपतिघ्न्येधि इत्युक्त्वा क्रामन्ति गृहात् । ततो वरस्य वस्त्रं ददाति । आदावभिषेकं करोति । हिरण्यगर्भ इति तिसृभिः प्रत्यृचम् । पश्चाद् वस्त्रं प्रयच्छति । वरो मंत्रं जपति—खे रथस्येति. (Cf. MānGṛ. 1. 8. 2-10).

2. E. अबालामंत्रस्यत्रिः.

3. Gdh. अथ वरस्यैवाहतं वासः प्रयच्छति.

4. Cf. MānGṛ. I. 8. 11.

5. The mss. शुल्वेण.

6. Cf. MānGṛ. I. 11. 6.

7. Gdh. भर्त्ता भार्याया वस्त्रस्य पल्लवं गृहीत्वा अभ्युदानयति । कराभ्यामुत्क्षिप्यानयति । होमस्थानं प्रेतीत्यर्थः. (Cf. MānGṛ. I. 11. 5).

8. F. ०वर्चाः.

9. Cf. MānGṛ. I. 10. 6.

10. E. adds खनन.

न्सर्वत्र यथानिमित्तम् ॥ ४ ॥ पश्चादग्नेः[1] कटे तेजन्यां वा दर्भेष्वासनम् ॥ ५ ॥ शुचौ भूमिप्रदेशे शमीशमकश्यामाकानां प्रियङ्गुदूर्वागौरसर्षपाणां यथालाभगन्धसत्क्षीरफलवद्भ्यो वनस्पतिभ्यो हरित्पर्णकुशयवा[2]दिभिश्चाग्नै-[3]र्या ओषधयैः । समन्या यन्तीत्य[4]नुवाकेन शं नो देवीरिति च सहिरण्यापोऽभिमन्त्र्य प्रणीतोदकुम्भं प्रणयेत् ॥[6] ६ ॥ तं लाजाहुतीषु हूयमानासु भ्राता ब्रह्मचारी वोद्गृह्य धारयेद् दक्षिणतश्च ॥ ७ ॥ लाजान्संस्कृतान्शमीपर्णमिश्रान्[7]शूर्पेण दक्षिणतो माताऽन्या वाऽविधवा ॥ ८ ॥ आज्यं संस्कृत्य ब्रह्माणमामन्त्र्य समिधमाधायाघारावाघार्याज्यभागौ हुत्वा ॥[8] ९ ॥ अथ जुहोति—

अग्नये जनविदे स्वाहा । सोमाय जनविदे स्वाहा । गन्धर्वाय जनविदे स्वाहा ।

सोमः प्रथमो विविदे गन्धर्वो विविद उत्तरः ।

तृतीयो ऽग्निष्टे पतिस्तुर्यो ऽहं मनुष्यजाः ॥ स्वाहा ॥

सोमो ऽददद्गन्धर्वाय गन्धर्वो ऽददग्नये ।

रयिं च पुत्रांश्चादादग्निर्मह्यमथो इमाम् ॥

इति ॥[10] १० ॥ हिरण्यगर्भ[11] इत्यष्टाभिः प्रत्यृचमाज्याहुतीर्जुहुयात् ॥[12] ११ ॥ येन कर्मणेत्सें[13]त्तत्र जयाञ्जुहुयादिति जयानां श्रुतिः । त्वा[14] यथोक्तम्[15] ।

1. E. adds दर्भे.
2. E. ०कुशस्कदर्भो यवा०.
3. E. ०ज्यै०, other mss. ०न्यै०. Cf. VārŚr. Par. Gṛhyapurusha kh. 11: शुचौ भूमिप्रदेशे शमीशमकश्यामाकानां दूर्वाप्रियंगुसर्षपाणां यथालाभं गंधांश्च क्षीरफलवद्भ्यो वनस्पतिभ्यो हरिपर्णः कूर्चः सदर्भो यवादिभिश्चाग्नैयो ओषधयः समन्या यन्तीत्यनुवाकाभ्यामिमा आपः प्रभरामि शं नो देवीरिति च.
4. MS. II. 7. 13.
5. MS. II. 13. 1.
6. This sūtra is missing in Gdh.
7. E. ०मिश्रितान्.
8. Cf. MānGṛ. I. 10. 8.
9. The mss. ०जन.
10. Cf. MānGṛ. I. 10. 8, 10.
11. MS. II. 13. 23.
12. Identical with MānGṛ. I. 10. 10 (last line).
13. The mss. ०च्छेत्त०.
14. This त्वा seems to refer to the one occurring in the following mantras.
15. Cf. MānGṛ. I. 10. 11: ०तत्र जयान् जुहुयात् । जयानां च श्रुतिस्तां यथोक्ताम्. Gdh. यत्र कर्मणा सिद्धिमिच्छेत्तत्र जयाहोमः । अतः सर्वत्रानेन वाक्येन जयानां विधानम् । अभ्रातृव्योपि ( Cf. MānGṛ.

आकूत्यै त्वा स्वाहा । भूत्यै त्वा स्वाहा । कामायै त्वा स्वाहा । रक्षायै त्वा स्वाहा । समृधे[1] त्वा स्वाहा । समृद्ध्यै त्वा स्वाहा । ऋचा स्तोमम्[2] । प्रजापतये । भूः स्वाहा । अयाश्चाग्ने ऽसीति च ॥[3] [4] १२ ॥ उत्तरतो ऽग्नेर्दर्भेषु प्राचीं कन्यामवस्थाप्य पुरस्तात्प्रत्यङ्मुख उपयन्ता देवस्य ते सवितुः प्रसवे ऽश्विनोर्बाहुभ्यां पूष्णो हस्ताभ्याꣳ हस्तं गृह्णाम्यहमसावित्यथास्या उपनयनवद्धस्तं गृह्णाति नीचारिक्तमरिक्तेन—

गृह्णामि ते सौभगत्वाय हस्तं मया पत्या जरदष्टिर्यथासत् ।
भगो अर्यमा सविता पुरन्धिर्मह्यं त्वादुर्गार्हपत्याय देवाः ॥
ऊर्ध्वा वाक्समभवत्पुरा देवासुरेभ्यः ।
यां त्वा विश्वस्य भूतस्य प्रागायाम्यस्या अग्रतः ॥
सरस्वति प्रेदमव सुभगे वाजिनीवति ।
येन भूतꣳ समभवद्येन विश्वमिदं जगत् ।
तामद्य गाथां गास्यामो[5] या स्त्रीणामुत्तमं मनः ॥
सा त्वमस्यमो ऽहममो ऽहमस्मि सा त्वम् ।
द्यौरहं पृथिवी त्वं बृहदहꣳ रथन्तरं त्वम् ।[6] रेतो ऽहमस्मि रेतोभृक्त्वम् ॥
सामाहमस्मि ऋक्त्वं मनो ऽहमस्मि वाक्त्वम् ।
सा मामनुव्रता भव सा मामनुप्रजायस्व ॥
प्रजाꣳ सृजावहा उभौ पुꣳसे पुत्राय कर्तवे ।
श्रियै पुत्राय वेथवेई (?) सूनृते ॥

com. भ्रातृव्यवानपि) एता जुहुयात् । ओं आकूत्यै त्वा स्वाहा...एतैर्मन्त्रैर्यथोक्तमित्यनेन एतदाह—एता एव तु, आकूतायेति न जयाः [यथा] शाखान्तरपठितविवाहे.

1. The mss. समिधे ( E. F. दे).
2. MS. II. 7. 1.
3. MS. I. 4. 3.
4. Cf. MānGr. I. 10. 11.
5. E. ०वो.
6. Gdh. omits this line.
7. The mss. ०वहावु०. So also VārŚr. Par.
8. So also VārŚr. Par. Prāyaścitta kh. 3. p. 213: स्नातां पत्नीं लोकमुपवेश्य हस्तमन्वारभ्य जपेत्—सा त्वमस्यमोहममोहमस्मि सा त्वञ्चावेह संꣳभावहै प्रजावहै प्रजा सृजावहावुभौ पुꣳसे पुत्राय कर्त्तवै श्रियै पुत्राय वेथवेह सूनृत इति.
E. Gdh. हेतवेह. Cf. JaimGr. I. 20 पुंसे पुत्राय वेत्तवै.

इति ॥[1]१३ ॥ प्रदक्षिणमग्निं परिणयेत् ॥[2]१४ ॥ पश्चादग्नेर्दर्भेष्वश्मानमवस्थापयति—

आतिष्ठेममश्मानमश्मेव त्वꣳ स्थिरा भव ।

कृण्वन्तु विश्वे देवा आयुष्टे शरदः शतम् ॥

इति ॥[2]१५ ॥ अत्रैवास्या द्वितीयꣳ वासः प्रयच्छति ॥[3]१६ ॥ उपर्यग्रावञ्जलौ लाजान्[4]भ्राता ब्रह्मचारी वोपस्तीर्ण आवपेत् ॥[5]१७ ॥ तानभिघारितानविच्छिन्दती जुहुयात् । कर्तानुमन्त्रयेत[6]—

इयं नार्युपब्रूते लाजानावपन्तिका ।

दीर्घायुरस्तु मे पतिरेधन्तां ज्ञातयो मम ॥

अर्यमणं नु देवं कन्याग्निमयक्षत[7] ।

सो ऽस्मान्देवो ऽर्यमा प्रेतो मुञ्चातु मामुत ॥ स्वाहा ॥

इति ॥[8]१८ ॥ वीरसूर्जीवपत्नीर्भूयासमिति सर्वत्र वाचयेत् ॥ १९ ॥

तुभ्यमग्ने पर्यणयꣳ सूर्याꣳ वहतुना सह ।

पुनः पतिभ्यो जायां दा अग्ने प्रजया सह ॥

इति द्वितीयं परिणयेत् ॥[8]२० ॥ एवमेव तृतीयम् । अवस्थापनप्रभृति समानम् । पूषणं नु देवम् । वरुणं नु देवमिति होमौ ।[9] कन्याग्निमयक्षतेति समानम् ॥[10]२१ ॥ कामेन चतुर्थीं पूरयित्वा द्विरभिघार्योत्तरार्धपूर्वार्धे जुहुयात् ॥ २२ ॥ अथैनां प्राचीꣳ सप्त पदानि प्रक्रमयति—एकमिषे विष्णुस्त्वां नयतु । द्वे ऊर्जे । त्रीणि रायस्पोषाय । चत्वारि मायोभवाय । पञ्च प्रजाभ्यः । षडृतुभ्यः । सप्त सप्तभ्यो होत्राभ्यः[11] ॥ विष्णुस्त्वां नयत्विति द्वितीयप्रभृत्यनुषजेत् । सखी सप्तपदी भव सख्यं ते गमेयꣳ सख्यात्ते मा रिषमिति[12] सप्तम

1. Cf. MānGṛ. I. 10. 15.
2. Cf. MānGṛ. I. 10. 16.
3. Cf. MānGṛ. I. 11. 4.
4. E. लाजा.
5. Cf. MānGṛ. I. 11. 11.
6. E. ०यते.
7. The mss. ०क्ष०.
8. Cf. MānGṛ. I. 11. 12.
9. For पूषणं नु देवं...होमौ E. has वरुणं पूषणं नु देवं.
10. Cf. MānGṛ. I. 11. 13.
11. For सप्तभ्यो होत्राभ्यः E. reads सप्तहोताभ्यः.
12. Gdh. गमेयं तेन सख्या मा युषं [योषम्].

एनां प्रेक्षमाणाꣳ समीक्षते ॥[1] २३ ॥

प्र त्वा मुञ्चातु वरुणस्य पाशाद्येन त्वाबध्नात्सविता सुशेवः ।

धातुश्च योनौ सुकृतस्य लोके हृष्टा सꣳ सह[2] पत्या भूयासम् ॥

इति शुल्वꣳ विस्रꣳस्योदकुम्भेन मार्जयन्ते—पुनन्तु मा पितर[3] इत्यनुवाकेन । आपोहिष्ठीयेनेत्येके ॥[4]२४ ॥

सुमङ्गलीरियꣳ वधुरिमाꣳ समेत्य[5] पश्यत ।

सौभाग्यमस्यै दत्त्वा यथार्थꣳ[6] विपरेतन ॥

इति ॥[7]२५ ॥ स्थालीपाकेन शेषो व्याख्यातः ॥ २६ ॥ पृथक्त्वेत् (?) । येन द्यौरुग्रेत्येवंप्रभृतय उद्वाहे होमाः स्युः । नापाणिग्रहणे लाजाः । समानं प्रक्रमणं मार्जनं च ॥[9]२७ ॥

इति वाराहगृह्ये चतुर्दशं खण्डम्[10] ॥

---

1. Cf. MānGṛ. I. 11. 18.
2. E. हृष्टा सह सं.
3. MS. III. 11. 10.
4. Cf. MānGṛ. I. 11. 20, 26.
5. Gdh. समेत.
6. Gdh. यथास्तं.
7. Cf. MānGṛ. I. 12. 1.
8. MS. II. 13. 23.
9. Cf. MānGṛ. I. 11. 14.
   Gdh. takes no notice of the last two sūtras, but simply goes on with some practices left unnoticed by the Sūtrakāra : [कन्या] पितृगृहे तत्रैव सीमन्तं करोति त्रिश्येतया शलल्या ।... ततो वर आचार्याय चैव तु सवत्सां गां दद्यात् ।...ततः त्रिरात्रं दम्पती स्यातामक्षारलवणाशिनौ । एकपात्रे सदाश्नीयात् । ...(Cf. MānGṛ. I. 12. 2, 7 : अत्रैव सीमन्तं करोति । त्रिश्येतया शलल्या...॥ उभौ सह प्राश्नीतः).
10. E. ०वाराहसूत्रगृह्ये षोडशं खंडम् । शुभं भवतु ॥
    F. ०चतुर्दशमं खंडम्.

# [ अथ रथारोहणम्[1] ]

अङ्क्तौ न्यङ्क्वावभितो रथꣳ ये ध्वान्तो[2] वाता अग्रमभि ये संपतन्ति ।
दूरेहेतिः पतत्री वाजिनीवाꣳस्ते नो ऽग्नयः पप्रयः पारयन्तु[3] ॥
इति चक्रमभिमन्त्रयते ॥[4] १ ॥
सुकिꣳशुकꣳ शल्मलिꣳ विश्वरूपꣳ हिरण्यवर्णꣳ सुधुरꣳ सुचक्रम् ।
आरोह सूर्ये अमृतस्य पन्थाꣳस्तेन याहि गृहान्स्वस्ति ॥
इत्यारोपयेत्[5] ॥[6] २ ॥
उप मायन्तु देवता उप ब्रह्म सुवीर्यम् ।
उप क्षत्रं च यद्बलमुप मामैतु यद्बलम् ॥
इति प्रयास्यन्जपति ॥[7] ३ ॥
अनु मायन्तु देवता अनु ब्रह्म सुवीर्यम् ।
अनु क्षत्रं च यद्यशमनु मामैतु यद्यशम् ॥

इति प्राश्वं प्रयाप्य प्रदक्षिणमावृत्य यथार्थलक्षण्यꣳ वृक्षं चैत्यꣳ वोपतिष्ठेत ॥[8] ४ ॥ नमो रुद्रायैकवृक्षसद इत्येकवृक्षे जपति । ये वृक्षेषु शष्पिञ्जरा इति च ॥[10] ५ ॥ नमो रुद्राय चतुष्पथसद इति चतुष्पथे । ये पथां पथिरक्षय इति च ॥[11] ६ ॥ नमो रुद्राय श्मशानसद इति श्मशाने । ये भूतानामधिपतये

1. Gdh. notes the following preliminaries: इदानीं भर्तृगृहं पुण्याहे गच्छेत् । ...तत्राहतेन च वाससा दर्भैर्वा रथं संमार्ष्टि प्रथमं दक्षिणं पश्चाद् वामम् । तत्र युञ्जन्ति ब्रध्नं (MS. III. 12. 18) इत्यश्वाभिमंत्रणे विनियोगः. Cf. MānGr̥. I. 13. 1–3.
2. VārŚr. ms. (p. 131) ध्वांता.
3. In VārŚr. ms. (ib.) the red ink corrections are: रथं यौ ध्वांतं वाताग्रमनुसंचरन्तौ । दूरेहेति पतत्रीरिंद्रियावान् ते नो०.
4. So also the VārŚr. ms. (ib.). Cf. MānGr̥. I. 13. 4.
5. According to Gdh. it is either the adhvaryu or the yajamāna who helps the bride to get into the chariot.
6. Cf. MānGr̥. I. 13. 6.
7. Cf. MānGr̥. I. 13. 8.
8. Cf. MānGr̥ I. 13. 7.
9. MS. II. 9. 9.
10. Cf. MānGr̥. I. 13. 11.
11. Identical with MānGr̥. I. 13. 13.

इति च ॥[1] ७ ॥ नमो रुद्राय पात्रसद इति पिबन् । ये अन्नेषु विविध्यन्तीति[2] च ॥ ८ ॥ ये तीर्थानीति[2] तीर्थे ॥[3] ९ ॥ यत्रापस्तरितव्या आसीदति—

समुद्राय वयुनाय सिन्धूनां पतये नमः ।

नदीनाꣳ सर्वासां पित्वे जुहुताँ विश्वकर्मणे । विश्वहादाभ्यꣳ हविः[5] ॥

इत्यप्सूदकाञ्जलीर्जुहुयात् ॥[6] १० ॥ यावताꣳ सखायानꣳ स्वस्तिमिच्छेत्तावत उदकाञ्जलीर्जुहुयात्—अमृतमास्ये जुहोम्यायुः प्राणे प्रतिदधामि । अमृतं ब्रह्मणा सह मृत्युं तरेम । प्रासहादितीष्टिरस्यदितिरेव मृत्युन्धयमिति त्रिराचाँमेत् ॥[6] ११ ॥ द्विः परिमृजेत् ॥[6] १२ ॥ यद्यत्ता शम्याणिर्वा रिष्येत तत्रैवाग्निमुपसमाधायाग्नेयेन स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृतः ॥[8] १३ ॥

## [ अथ गृहप्रवेशः ]

अपरस्याह्नः संधिकाले गृहान्प्रपादयेत् ॥[9] १४ ॥ रथाद्यौपासनात्संततामुलपराजीꣳ स्तृणाति ॥[10] १५ ॥ तयाभ्युपैति ॥[11] १६ ॥

गृहानहꣳ सुमनसः प्रपद्ये ऽवीरघ्नी[12] वीरवतः सुशेवा ।

इराꣳ वहन्ती घृतमुक्षमाणाꣳस्तेष्वहꣳ सुमनाः सꣳविशामि ॥

इत्यभ्याहिताग्निꣳ सोदकꣳ सौषधमावसथं प्रपद्ये[त] । रेवत्या रोहिण्या यद्वा पुण्योक्तम् ॥[13] १७ ॥ आनडुहे चर्मण्युपविश्य ॥[14] १८ ॥ [15] अथास्या ब्रह्म-

1. Identical with MānGṛ. I. 13. 12.
2. MS. II. 9. 9.
3. Cf. MānGṛ. I. 13. 14.
4. The mss. जुहुत्वा.
5. Cf. MS. II. 10. 6 विश्वाहादाभ्यꣳ हविः.
6. Cf. MānGṛ. I. 13. 15.
7. F. ०च०.
8. Cf. MānGṛ. I. 13. 17.
9. Cf. MānGṛ. I. 14. 1.
10. Cf. MānGṛ. I. 14. 4, 5.
11. Cf. MānGṛ. I. 14. 5.
12. Thus corrected. The verse occurs in an incorrect form in all Gṛhyasūtras. Our mss. read सुशेवान्, वहतीर् (or वहन्ति), उक्षमाणास्, संविशाम. The emended verse presents a fine parallelism between the attributes of गृहान् and अहं—गृहान् सुमनसः, अहं सुशेवा । गृहान् वीरवतः, अहं अवीरघ्नी । गृहान् घृतमुक्षमाणान्, अहं इरां वहन्ती.
13. Cf. MānGṛ. I. 14. 6.
14. Cf. MānGṛ. I. 14. 7.
15. Henceforth Sh. reverts to the Vārāha text.

चारिणं जीवपितृकं जीवमातृकमुत्सङ्गमुपवेशयेत् ॥[1]१९ ॥ फलानामञ्जलिं पूरयेत्तिलतण्डुलानां[2] वा ॥[3]२० ॥ अच्युता ध्रुवा ध्रुवपत्नी ध्रुवं पश्येम विश्वत इति ध्रुवं जीवन्तीं सप्तर्षीनरुन्धतीमिति दर्शयित्वा प्राजापत्येन स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाज्यस्य[4] पुरस्तात्स्विष्टकृत आज्यशेषे दध्यासिच्य दधिक्राव्णो अकारिषमिति[5] दध्नः पुमांस्त्रिः[6] प्राश्नाति ॥[7]२१ ॥

चक्रमिर्वानडुहः[8] पदं मामेवान्वेतु ते मनः ।
मां च पश्यन्ति सूर्यं च मा चान्येषु मनस्कृथाः ॥[9]
चाक्रवाकं संवसनं[10] तन्नौ[11] संवननं कृतम् ॥

इत्यवशिष्टं जायायै[12] प्रयच्छति ॥[13]२२ ॥ तूष्णीं सा प्राश्नाति ॥[13]२३ ॥ संवत्सरं मुदा तौ ब्रह्मचर्यं चरतः । द्वादशरात्रं त्रिरात्रमेकरात्रं वा ॥[14]२४ ॥ एवमेव चतुर्थ्यां कृत्वा हिरण्यगर्भ[15] इत्यष्टाभिः स्थालीपाकस्य हुत्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृतः ॥ २५ ॥ अथास्याः सव्ये ऽंसे पूषा ते ग्रन्थिं ग्रथ्नात्विति[16] वाससो ग्रन्थिं क्रियमाणमनुमन्त्रयते ॥ २६ ॥ चतस्रो ऽविधवाः कुर्वन्ति । ताभ्यो हिरण्यं ददाति ॥ २७ ॥ संवत्सरं न प्रवसेत् । द्वादशरात्रं त्रिरात्रमेकरात्रं वा ॥ २८ ॥

इति[17] वाराहगृह्ये पञ्चदशं खण्डम्[18] ॥

---

1. Cf. MānGṛ. I. 14. 8.
2. Sh. °तण्डुलान्.
3. Cf. MānGṛ. I. 14. 9.
4. Sh. °श्चाज्यं.
5. Sh. ऽकारिषम्. F. and VārŚr. p. 15 अकार्षम्, and again p. 17 अचार्षम्. MS. I. 5. 1.
6. Sh. omits पुमान्.
7. Cf. MānGṛ. I. 14. 9-12.
8. Sh. चक्रीमिषाऽ°.
9. Sh. adds सोमेनादित्याः.
10. Sh. संवननं.
11. F. तन्नो.
12. Sh. पत्न्यै.
13. Cf. MānGṛ. I. 14. 12.
14. Cf. MānGṛ. I. 14. 14. Sh. omits this and the following sūtras of this khanda. In their stead he reads three Mānava sūtras (I. 14. 13-15).
15. MS. II. 13. 23.
16. MS. I. 1. 2.
17. F. omits इति.
18. Sh. does not end the khanda here, but goes on with Garbhādhāna.

## [ अथ गर्भाधानम्[1] ]

तौ संनिपातयतः[2] ।
अपश्यं त्वा मनसा चेकितानं तपसो जातं[3] तपसो ऽभिभूतम् ।
इह प्रजामिह रयिꣳ रराणः प्रजायस्व प्रजया पुत्रकाम ॥
अपश्यं त्वा मनसा दीध्यानाꣳ स्वायां तनूꣳ[4] ऋत्विये नाधमानाम् ।
उप मामुच्चा[5] युवतिर्बभूयात्प्रजायस्व[6] प्रजया पुत्रकामे ॥
प्रजापते तन्वं मे जुषस्व त्वष्टा वीरैः सहसाहमिन्द्रः (?) ।
इन्द्रेण देवैर्वीरुधः सꣳव्ययन्तां[7] बहूनां पुꣳसां पितरौ[8] स्याव[9] ॥
अहं प्रजा अजनयं पृथिव्यामहं गर्भमदधामोषधीषु[10] ।
अहꣳ विश्वेषु भुवनेष्वन्तरहं प्रजाभ्यो बिभर्षि (?) पुत्रान् ॥
इति स्त्र्यादिव्यत्यासं जपतः[11] ॥[12] १ ॥ करदिति भसदभिमृशेत्[13] ॥[14] २ ॥ जनदित्युपरिजननम् ॥[15] ३ ॥ बृहदिति जातः प्रतिष्ठितम् ॥[16] ४ ॥

1. For Garbhādhāna (excepting इन्द्रेण देवैर्वीरुधः...बिभर्षि पुत्रान्) Sh. gives the Mānava text (I. 14. 16-20, excepting the second half of 16c, and the whole of 16d).
2. Cf. MānGṛ. I. 14. 16 तौ संनिपातयेत्.
3. Gdh. ऽभिजा॰.
4. The mss. तनूम्.
5. F. ॰मुचा.
6. F. प्रजाय प्रजायस्व.
7. Sh. Gdh. संविदानां.
8. Sh. पितरः
9. Sh. Gdh. स्याव, F. स्यामः.
10. F. ॰मादधाम्यो॰.
11. Gdh. रात्रौ तृतीये प्रहरे ऽन्यस्मिन्वा धर्माविरुद्धे तौ दम्पती एकस्मिन्शयने सन्निपातयतः। भार्या भर्तुरुपरि, भार्यामुपरि भर्ता स्वं स्वमपश्यन्निति । चुम्बनदशननखघातादिभिः सुज्ञात्यप्रासये सकृत्पृष्ठावलम्बितयज्ञोपवीती गच्छेत् । गमनात् पूर्वं पश्चाद्वा अपश्यं त्वा....इत्यादीनां मंत्राणां...गर्भाधानकर्मणि दम्पत्योः पठने विनियोगः। अपश्यं॰ पुत्रकाम...इति पत्नी जपेत्।...अपश्यं॰ पुत्रकामे...इति पतिः। ....प्रजापते...इत्युभयोर्जपः।...अहं प्रजाः ...इति पतिर्जपेत्.
12. Cf. MānGṛ. I. 14. 16.
13. Gdh....इति प्रथमं पतिः पत्न्या गुह्यं स्पृशेत्. The sense of अभिमृशेत् is further brought out by BaudhGṛ. Paddhati (Panjab University ms. 4326 p. 29b): अस्या योनिं विवृणोति.
14. Cf. MānGṛ. I. 14. 17.
15. Gdh. ओं अजनदिति पत्नी स्पृशेद् भर्तुर्गुह्यम्. Cf. MānGṛ. I. 14. 18.
16. Gdh. बृहदस्य रेतो देवता, रेतस्पर्शने विनियोगः। ओं बृहदिति पतिः । जातः प्रतिष्ठितं रेतः सिक्तमित्यर्थः. Cf. MānGṛ.

## [ अथ पुंसवनम् ]

अथास्यास्तृतीये गर्भमासे पुंसा नक्षत्रेण यदहश्चन्द्रमा न दृश्येत[1] तदहर्वोपोष्याप्लाव्याहतं वास आच्छाद्य न्यग्रोधावरोहशुङ्गान्[2]युदपेषं पिष्ट्वा[3] दक्षिणस्मिन्नासिकाछिद्र आसिञ्चेत्—हिरण्यगर्भः[4] । अद्भ्यः संभृत इत्येताभ्याम् ॥ ५ ॥ अथास्या दक्षिणं कुक्षिमभिमृशेत्—

पुमानग्निः पुमानिन्द्रः पुमान्देवो बृहस्पतिः ।
पुमानग्निश्च वायुश्च पुमान्गर्भस्तवोदरे[5] ॥
पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ ।
पुमांसं गर्भं जायस्व त्वं पुमाननु[6]जायताम् ॥

इत्येताभ्याम् ॥ ६ ॥

## [ अथ सीमन्तोन्नयनम् ]

अथास्याः पञ्चमे षष्ठे सप्तमे वा गर्भमासे मङ्गल्यैः स्नापयित्वा प्राजापत्येन स्थालीपाकेनेष्ट्वा जयप्रभृतिभिश्चाज्यस्य पुरस्तात्स्विष्टकृतः । पश्चादग्नेर्दर्भेष्वासीनायाः सर्वान्केशान्विप्रमुच्य

त्वमर्यमा भवसि यत्कनीनां देवः स्वधावो गुह्यं बिभर्षि ।
अञ्जन्ति विप्रं[10] सुकृतं न गोभिर्य[11]द्दम्पती सुमनसा कृणोषि[12] ॥

इति नवनीतेन पाणी प्रलिप्य सर्वान्केशान्संप्रयौति ॥[13] ७ ॥ इन्द्राणी चक्रे[14] कङ्कतं स[15] सीमन्तं विसर्पतु [ इति कङ्कतं गृह्णाति ][16] ॥ ८ ॥ पुनः

I. 14. 19.

With Garbhādhāna Sh. concludes his 18th khaṇḍa.

1. Sh. ॰श्यते.
2. Sh. ॰ङ्गान् उ॰.
3. Sh. omits पिष्ट्वा.
4. MS. II. 7. 15.
5. Sh. ॰थोदरे.
6. Sh. पुमानुप॰.
7. Sh. मा॰.
8. Sh. Gdh. विमु॰.
9. Thus Gdh., other mss. यः.
10. Sh. विश्रं.
11. Sh. F. सुकृतं तपोभिर्य॰, Gdh. सुतं मनोभिर्य॰.
12. Sh. समनसा कृणोमि.
13. Cf. MānGṛ. I. 15. 1.
14. Gdh. adds केशप्रसाधनीं.
15. Sh. Gdh. omit स.
16. Gdh. इन्द्राणीति...कंकतग्रहणे विनियोगः । इन्द्राणी चक्रे...इत्यनेन गृह्णाति.

पत्नीमग्निरिति[2] [ केशप्रसाधनं कुर्यात् ][3] ॥[4] ९ ॥ शलल्या शमीशाखया सपलाशया[6]—

अन्तर्वती[7] पुमांसं दीर्घं जीवन्तं शतायुषम् ।

दीर्घायुरस्या यः पतिर्जीवातु शरदः शतम् ॥

इति त्रिश्वेतया[10] सीमन्तं करोति ॥[11] १० ॥ अथास्याः[12] पतिर्द्वेधा केशान्बध्नाति—नीललोहितेन सूत्रेण जीवोर्णया वा ॥ ११ ॥

इति वाराहगृह्ये षोडशं खण्डम्[13] ॥

---

# [ अथ वैश्वदेवकर्म ]

अथ वैश्वदेवं व्याख्यास्यामः ॥ १ ॥ तत्र सायंप्रातःप्रभृतीनामग्निहोत्रवत्परिसमुह्य परिस्तीर्य[14] पर्युक्ष्य[15] सायं प्रातः स्यादित्येके ॥ २ ॥ हवि-

1. F. ॰मग्निम्. Sh. omits this verse. ṚV. X. 85. 39. It is to be noted that the mantra is not given sakalapāṭhena.
2. F. omits इति.
3. Gdh. पुनः पत्नीमददादायुषा सह वर्चसेति (but cf. ṚV. ib.) कंकतेन अनेन मंत्रेण केशप्रसाधनं कुर्यात्.
4. Cf. MānGṛ. I. 15. 1.
5. F. सह॰.
6. Sh. adds एकीकृत्य कङ्कतेन, F. adds पूर्णपात्रेण नेति कंकेतेम.
7. Thus F., others ॰र्वत्नी.
8. Gdh. दीर्घजीवं.
9. Sh. ॰ति.
10. F. त्रिग्वे॰.
11. Cf. MānGṛ. I. 15. 1. Gdh. ओं अन्तर्वत्नी...शरदः शतमित्यनेन मन्त्रेण त्रिश्वेतया त्रिषु स्थानेषु श्वेतेन शमीशाखया सह पलाशशाखया एकीकृत्य तया शलल्या पूर्णचन्द्रे सह (?) पतिः भार्यायाः सीमन्तं करोति.
12. With अथास्याः F. stops.
13. Sh. एकोनविंशः खण्डः.
14. Sh. puts पर्युक्ष्य before परिस्तीर्य.
15. Cf. VārŚr. Par. Gṛhyapurusha kh. 1: तेन सायंप्रातःप्रभृतीनामग्निहोत्रवत्परिसमुह्य परिस्तीर्य पर्युक्ष्य.

ष्यस्य वा सिद्धस्य वैश्वदेवः ॥[1] ३ ॥ अग्नये सोमाय प्रजापतये धन्वन्तरये वास्तोष्पतये विश्वेभ्यो देवेभ्यो ऽग्नये स्विष्टकृते च जुहुयात् ॥[2] ४ ॥ अवशिष्टस्य बलिꣳ हरेत् ॥[3] ५ ॥ दधिमधुमिश्रस्याग्नये पुरस्तात्, यमाय दक्षिणतः[4], सोमाय पश्चात्[5], वरुणायोत्तरतः[6], मध्ये वरुणार्यमभ्यां[7] ब्रह्मणे[8] च । अग्नये पृथिव्यै वायवे ऽन्तरिक्षाय सूर्याय दिवे चन्द्रमसे नक्षत्रेभ्य इति ॥[9] ६ ॥ अद्भ्यः कुम्भदेशे ॥[10] ७ ॥ ओषधिवनस्पतिभ्यो मध्यदेशे[11] ॥[12] ८ ॥ कामाय । गृहपतये[13] इति शय्यादेशे ॥[14] ९ ॥ श्रियै च ॥[15] १० ॥ रक्षोजनेभ्यो ऽन्तः शरणे ॥[16] ११ ॥ आकाशायेति स्थलिकाण्डाभ्याम्[17] (?) ॥[18] १२ ॥ तूष्णीं निष्क्रम्योपरि शरणे ॥[19] १३ ॥ कव्यं[20] प्राच्याम् ॥ १४ ॥ पितृभ्यः स्वधेत्यनुषजेत् ॥[21] १५ ॥ नम इत्यन्ते च ॥ १६ ॥ ये ब्राह्मणाः प्राच्यां दिश्यर्हन्तु[22] । ये देवा यानि भूतानि प्रपद्ये तानि मे स्वस्त्ययनं कुर्वन्त्विति । दक्षिणस्याम् । प्रतीच्याम् । उत्तरस्याम् । ऊर्ध्वायाम् ॥ ये ब्राह्मणा इति सर्वत्रानुषजेत् ॥ १७ ॥ स्नेहवदमाꣳसमन्नं भोजयित्वा विदुषो[23] ब्राह्मणानर्थसिद्धिꣳ[24] वाचयेत् ॥ १८ ॥

1. VārŚr. Par. Gṛhyapurusha kh. 1: हविष्यस्य सिद्धस्य वैश्वदेवः. Cf. MānGṛ. II. 12. 1.
2. Identical with VārŚr. Par. (ib.). Cf. MānGṛ. II. 12. 2.
3. VārŚr. Par. (ib. kh. 16): अवशिष्टस्य बलीर्हरेत. Cf. MānGṛ. II. 12. 3.
4. Cf. MānGṛ. II. 12. 13.
5. Cf. MānGṛ. II. 12. 15.
6. Cf. MānGṛ. II. 12. 14.
7. VārŚr. Par. (ib.) वरुणाभ्यां.
8. Cf. MānGṛ. II. 12. 16.
9. Identical with VārŚr. Par. (ib.).
10. Identical with VārŚr. Par. (ib.). Cf. MānGṛ. II. 12. 4.
11. VārŚr. Par. (ib.) मध्यमा०.
12. Cf. MānGṛ. II. 12. 5.
13. It may be that कामाय and गृहपतये form one verse, the two i.e. Kāma and Gṛhapati being identified with each other.
14. Identical with VārŚr. Par. (ib.).
15. Identical with VārŚr. Par. (ib.). Cf. KāṭhGṛ. IV. 14. 5: स्थूणायां ध्रुवायां श्रियै हिरण्यकेश्यै वनस्पतिभ्यश्चेति.
16. Identical with VārŚr. Par. (ib.).
17. VarŚr Par. (ib) स्थलीकांडाक्या.
18. Cf. MānGṛ. II. 12. 8.
19. Cf. KāṭhGṛ. IV. 14. 10: उपरि शरणे वैश्रवणाय राज्ञे भूतेभ्यश्चेति.
20. VārŚr. Par. (ib.) कव्यां.
21. Identical with VārŚr. Par. (ib.).
22. VārŚr. Par. (ib.) ०र्हन्तो.
23. Sh. विदिशो, but cf. VārGṛ. IV. 26 विदुषो ब्राह्मणानर्थसिद्धिꣳ वाचयेत.
24. Sh. ०सिद्धं.

बलिहरणस्यान्ते यामाशिषमिच्छेत् तामा[शा]सीत ॥ १९ ॥ गृहपतिः—ओमक्षयमन्नमस्त्वित्याह ॥ २० ॥ भिक्षां प्रदाय सायंभोजनमेव प्रातराशेत् ॥ २१ ॥ विप्रोष्य गृहानुपतिष्ठेत् ॥ २२ ॥

इति वाराहगृह्ये सप्तदशं खण्डम् ॥

---

इति वाराहगृह्यसूत्रम् ॥

1. Sb. ०वैश्वदैविकः खण्डः.

# APPENDIX I

## A LIST OF VARIATIONS

BETWEEN

THE MĀNAVA TEXT OF SASTRY'S VĀRĀHA-GṚHYA

AND

THE CORRESPONDING PASSAGES

IN

DR. KNAUER'S EDITION OF THE MĀNAVA-GṚHYA

In Sastry's edition of the Vārāha-Gṛhyasūtra the text for chapters 13-17 and a part of ch. 18 is derived from a MānGṛ. ms. ch. I. 8, 10-13 and the first 7 ( excepting one verse and a half, i. e. second half of 16c and the whole of 16d) together with the last 8 aphorisms of ch. I. 14. For the use of a future editor of the MānGṛ. the variations from Dr. Knauer's edition are noted below:

| Dr. Knauer's MānGṛ. | Sastry's variants |
|---|---|
| I. 8 | |
| 3. प्राक्कूलान् | प्राङ्मूलान् |
| 5. मङ्गल्यानि | मङ्गलानि |
| 6. ,, | ,, |
| 10. जपन्त्याऽन्ताद् | जपत्यन्ताद् |
| 11. सूर्यत्वचम् | सूर्यवर्चसे (var. lect. ) |

I. 10

| | | |
|---|---|---|
| 1. | चतुरस्रं | चतुरश्रं |
| | प्रणयेत् [तत्र ब्रह्मोपवेशनम्] | प्रणयेत्। तत्र ब्रह्मोपवेशनम्। |
| 2. | परिसमुह्य | परिसमूह्य |
| 3. | प्राक्तूलान् | प्राक्कूलान् |
| | अवस्तृणाति | अवस्तृणाति। अग्न्यायतनस्य मध्यमदक्षिणोत्तरप्रदेशेषु उदगग्रपूर्वाग्रान्परिधीन्परिदधाति। |
| 4. | अपरमपरं | अपरमपर- |
| | लाजाधार्याश्च | लाजाधारायाश्च |
| 5. | शमीमयीः शम्याः | शमीमयीं शम्यां |
| 7. | युगतन्मनोऽधस्तात् | युगतस्तन्मना ह्स्तात् |
| | तिसृभिरद्भिः | तिसृभिः |
| | वाणशब्दं | वाणशब्दं |
| 8. | याश्च आ | याश्चाग्रथा |
| | अततनन्त | ततन्थ |
| | आघारावाज्यभागौ | आघारावाघार्याज्यभागौ |
| | जनविदे | जनिविदे |
| | सोमाय...दक्षिणार्धे | सोमाय जनिविदे स्वाहेत्युत्तरार्धे जुहोति सोमाय जनिविदे स्वाहेति दक्षिणार्धे। |
| | जनविदे | जनिविदे |
| 9. | युक्तो वह...ऋतुदेवतां च | युनज्मि त्वेति जातवेदसं कामं युक्तो वहेति जातवेदसं भिषजं, विश्वाश्च इति चाग्निं नक्षत्रमिष्ट्वा नक्षत्रदेवतां अहः अहर्देवतां रात्रिं रात्रिदेवतां ऋतुं ऋतुदेवतां यजेत्। तिथिं तिथिदेवतां विरूपाक्षं च। |
| 11. | श्रुतिस्तां | श्रुतिस्थां |
| | कामाय | कामायै |
| 12. | प्रत्यङ्ङुपयन्ता | प्रत्यङ्मुखः |
| 13. | प्रजापतिष्ट्वा नियुनक्तु | प्रजापतिस्त्वा नियुनक्ति |
| 15a. | गृभ्णामि | गृह्णामि |
| | भगो अर्यमा | भगोऽर्यमा |
| b. | समवदत | समभवत् |

| | | |
|---|---|---|
| | गाथां | गाथां |
| c. | प्रेदमव | प्रेदमिव |
| | यां | या |
| | अस्याग्रतः | अस्या अग्रतः |
| e. | वेधवै | वैधवै |
| 16. | आस्थापयति | आस्थापयतः |
| 17ab. | अवरोह सह पत्न्या ॥ आरोहस्व | अवरोहस्व |
| | I. 11 | |
| 2. | पूष्णे [ ऽग्नये ] | पूष्णे ऽग्नये |
| | वाभिनिरूप्य | वा निरूप्य |
| | भृज्जाति | प्रभृति |
| 3. | अविधवायै | अविधवायाः |
| 6. | सं त्वा…पृथिव्याः सं त्वा | सं त्वा |
| | संनह्यते | संनह्यति |
| 7. | अथैनानि | अथैनाम् |
| | इषीका अश्मानमाञ्जनं | इषीकाश्मानं अञ्जनं |
| 8. | चतसृभिः…संनिष्कृष्य | चतसृभिः सतूलाभिरित्येकैकपातैक-कुभस्याञ्जनस्य सन्निकृष्य |
| 9. | वध्वै | वध्वे |
| 10. | पश्चादग्नेः | पश्चाद् |
| 12. | ता अविछिन्नैर्जुहुतः | तावच्छुन्नतीर्जुहुयात् |
| a. | कन्या अग्निम् | कन्याऽग्निम् |
| | अस्मान् | इमां |
| | मामुतः | नामुतः |
| b. | अग्नेः | अग्ने |
| 14. | संततिहोमाः | सन्ततिहोमं |
| 15. | इत्यभ्यातानाः | इत्याभ्यातानाः |
| | प्राणादपानं | प्राणदपानं |
| 16. | मङ्गल्ये | माङ्गल्ये |
| 21. | स त्वं…ऽसीति च | मनो ज्योतिः त्रयस्त्रिंशत्तन्तवः अयाश्चाग्ने । |
| 23. | इति च हुत्वा | इति च हुत्वा इमं स्तनं मधुमन्तं धयायां प्रपीनमग्ने सलिलस्य मध्ये । उत्सञ्जुषस्व मधुमन्तमूर्मिं समुद्रयं सदनमाविवेश स्वाहा इति परिधिविमोकमभि- |

| | | |
|---|---|---|
| | | जुहोति । अन्नपते इत्यन्नस्य जुहुयात् । |
| 25. | उपतिष्ठन्ते | उपतिष्ठते |
| 26. | कुम्भाद्...मार्जयन्ते | कुम्भादुदकेन पुनन्तु मा पितर इत्यनुवाकेन मार्जयन्ते । आपोहिष्ठीयाभिरित्येके । |

I. 12

| | | |
|---|---|---|
| 3. | अभ्यञ्जन्ति | अभ्यञ्जति |
| | यशसे बहुपुत्राः | यशसे |
| | शिवा...चिरायुः | शिवा भव भर्तुः श्वशुरस्या वदायुष्मती श्वश्रुमती चिरायुः । |
| 4. | अवृजिनान् | वृजिनान् |
| | सखीभ्यः | सखिभ्यः |
| | वाह्नेषु | वा जनेषु |
| 5. | अथैनौ | अथैतौ |
| 6. | जपन्ति | दंपती |

I. 13

| | | |
|---|---|---|
| 4. | अङ्कू | अङ्कौ |
| | अभिमन्त्रयते | मन्त्रयते |
| 5. | वीड्वङ्ग | विड्वङ्ग |
| 7. | प्राङभिप्रयाय | प्राक् अभिप्रायाय |
| 9. | चेदतिक्रामति...इति जपति | चेत्यतिक्रामति |
| 15a. | विश्वाह्वा जुषर्ता | विश्वाह्वजुषतां |
| | उदकाञ्जलीन् | उदकाञ्जलिं |
| b. | रिष्टिरिति...परिमृज्याचामति } | रिष्टिरिति जपेत् |
| 16. | यदि...सुत्रामाणमिति जपेत् } | |
| 17. | शम्याणी | शम्याणि |
| | वध्वा सह | वध्वा |
| 18 | पन्थां | पथां |
| | इडयास्याग्रतः | इत्यस्याग्रतः |
| | येन येन | येन येन पथा |

I. 14

| | | |
|---|---|---|
| 1. | अपरस्मिन्नहः | अस्मिन्नहः |
| 4. | संततामुलपराजिँ स्तृणाति } | सन्तता मूलपराजितं स्तृतरथादध्योपसादनात् |
| 5. | रथादध्योपासनात् } | |

| | | |
|---|---|---|
| 6. | सुशेवा | सुशेवाः |
| | वद्दन्ती | वद्दन्तीं |
| | सुमनाः सँवसाम | समना संविशाम |
| | प्रतिपद्यते | प्रतिपद्येत |
| | रोहिण्या | रेवत्या रोहिण्या |
| 16b. | बाधमानां | नाथमानां |
| 17. | भसदम् | भसद् |
| 18. | उपजननम् | उपजनम् |
| 19. | जातं प्रतिष्ठितम् | जातम् |

# APPENDIX II

## MANTRA INDEX

Such of the mantras as are not to be found in the Vedic Concordance or as show some variations therefrom are marked with an asterisk.

---

# APPENDIX III

## WORD INDEX*



* The editor had compiled a complete word index, but on account of the shortage of funds it had to be cut down to the limit of six pages. The words occurring in the mantras have been entirely ignored.